त्मयत्व प्रतिभाषमाणं प्रसन्नचक्षाणम् । अहो सर्वात्मा सन् किमर्थमेव वदतीति किंचित्सरम्भेण प्रणयकोपेन गद्गदा अस्फुटस्खलिताऽक्षरा गीर्यासां ताः । ननु भगवति ईषत्सरम्भोऽप्यनुचित, तासां मुखाद् भगवद्वाक्यप्रत्युत्तररूपा वाणी च कथं निःसृता इतिचेत् तत्राह ॥ अनुरक्ता इति ॥ स्वल्पस्यापि रागस्य भयनिवर्तकत्वात् परमानुरागवतीनां तासां का भयसम्भावनेति भावः । यतः, तदर्थं तैर्निवर्तितसर्वकामाः ॥ तदर्थं भगवदर्थं विशेषेण त द्वासनासाहित्येन निवर्तिता सर्वे कामा याभिस्ताः । तथाच भगवदतिरिक्तसर्वकामस्य तदिच्छायाश्च सक्तत्वाद्भगवद्विषयकं कामस्य च मोक्षकामवदकामरूपत्वात् न मानभिज्ञानां तदनुरक्तचेतसां नास्ति किञ्चिदपि भयमिति भावः ॥ अनभिज्ञापक्ष, तथाभूतां दशां प्राप्ता अपि ताः, अहो किमिसैवमरण्यरोदनं कर्तुं प्रवृत्ता, स्वस्थाः प्रसन्नमुखाः सत्यः स्वस्वगृहं तूर्णं किं न गच्छत इत्यव महत्तम यद्यौरुवाच तदा तानि वाक्यानि तासां कर्णाऽवनाऽन्तःप्रविष्टानि । ततश्च तैरेवोद्बोधितास्तत्सजातीयवाक्यैर्भगवद्वाक्यानां प्रत्युत्तरं वक्तुमारेभिर इत्याशयेनाह ॥ प्रेष्ठमिति ॥ बहुकालमारभ्य परमेमास्पदत्वेन निश्चितमदानीं, प्रियेतरमिव, यथा प्रियतरः क्षत्रुर्वदति तथा—प्रतियातेत्यादिवज्रादप्यतिकठोरं प्रत्याख्यानरूपं वाक्यं भाषमाणम् । प्रियेतरमिव अप्रियवाक्यसदृशं वाक्यमिति वा । तत्रापि, कृष्णं सम्प्रत्यपि वेणुनादेन चित्तरत्नमञ्जूषाया आकृष्य सौचित्येन स्थितम् । अत एव, तदर्थं विनिवर्तितसर्वकामाः रुदितोपहते अधीभूते नेत्रे विमृज्य, अहो मरणसमयेऽयमस्माकमागतस्तस्मात् सकृदपि प्रेष्ठस्य मुखपद्ममवलोक्य मरिष्याम इत्याकाङ्क्षयेति भावः । अहो प्रकृष्टत्वेनाश्रितोऽप्य विनाऽपराधं कथमेवंविधमाणा तदण्ड दातुमुद्यत इति सर-

म्भः । स्वस्मिंस्तदङ्गसङ्गायोग्यतां विचार्य्य तच्छेथिल्यमिसतः किञ्चित्सरम्भणेत्युक्तमानतु सर्वथाऽपि प्रेमशू येन तेनाल भाषणा दिनेति चेत् तत्राह ॥ अनुरक्ता इति ॥ अनुरागाद् यविचाररहि तत्वात्प्रसारुयाता अपि पुनस्तत्रैवानुरक्त्य त इति भाव• ॥ मानिनी पक्षे, वस्तुतः परमप्रिय प्रियेतरमिव प्रतीयमान वाक्य प्रतिभा षमाण कृष्णमनुरत स्म । अहो कथमस्मान् परदारानित्थ वदसी ति कोपेनाऽन्त•करणस्थोत्कटात्कण्ठया शिथिलीकृतत्वात् स्वरूपेन गद्गदभूता गिरो यासा ता• । यथोक्त प्रार्थनारूप वाक्यमाकर्ण्य ततोऽप्यधिकमनुरक्ता ॥

निवृत्तिपक्षे ॥ मेयम ॥ सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वै रहमेव वेद्य इत्यादिश्रुतिस्मृतिभ्यो वेद्यत्वेनात्यर्थमभिमतम् । तच्चद्वा दिरूपेण श्रुतीना ब्रह्माणि प्रामाण्य नास्तीत्येवमादिरूप प्रियेतरमिव प्रतिभाषमाण प्रवाचक्षाण कृष्ण फलरूप सदान दात्मक परमात्मान तदर्थं परमात्मप्राप्त्यर्थं विशेषेण निवर्तिता अधिकारिणा सर्वे कामा याभि• । तथाच श्रुतिः— यदा सर्वे प्रमुच्य न्त कामा येऽस्य हृदि श्रिताः ॥ तदा मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इत्याद्या• । इति तेन स्वार्थानाभञ्जवाच्यमिहितवर्क्षकृतेन रहितेनोपहते ने न यथा भूतार्थप्रकाशनसमर्थे शक्तिलक्षणालक्षणे नियुज्य किञ्चित्सरम्भेण, अहो आस्तिकरूपेण स्थितोऽपि भगवानि त्थ वदतीति ईष त्कोपेन गद्गदाश्रद्ध दसा गिरो यासा ता• । किञ्च, तस्मिन्नेवा ऽनुरक्ताः ॥ ३० ॥ ॥ तदुदाहरति ।

गोप्य ऊचु ॥

मैवं विभोऽर्हति भवान् गदितु नृशंस
सन्त्यज्य सर्वविषयाँस्तव पादमूलम् ॥

भक्ता भजस्व दुरवग्रह मा त्यजाऽस्मान्
देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥

मैवमिति ॥ यद्यपि वयं निकृष्टास्तथापि सर्वोत्तमो भवान् षड्विधैश्वर्यसम्पन्नः, प्रतियातस्वेवरूपं नृशंसं क्रूरमस्मत्प्राणापहरणसमर्थत्वाद् घातुकम्। नृशंसमिति किञ्चित्सरम्भाविष्कारः। यद्यपि भगवता प्रथमं स्वागतमित्यादिना स्तुतास्तथाप्यऽग्रे, प्रतियातेत प्रतिगमनाभिधानात् तदपि नास्माकं प्रेमातिरेकवर्णनाभिप्रायकमपि तु व्यङ्ग्योत्पत्त्योपहासपरमतस्तदपि नृशंसमेव । परिच्छिन्नस्य परकीयान्तःकरणवृत्त्यनभिज्ञस्यैवविधोक्तिः कदाचिद् घटते, न तु विभोर्व्यापकस्य सर्वाऽन्तरवस्थितत्वात् सर्वान्तःकरणवृत्तिसाक्षिण इत्याशयेन सम्बोधयन्ति ॥ विभो इति ॥ अत एव व्रजस्याऽनामयं कच्चिदिति प्रश्नोऽपि न सगच्छते। तत्कुशलाकुशलयोरुदासीनभूताऽस्मदन्तःकरणवृत्तिज्ञत्वादित्याशयेनाहुः ॥ सन्त्यज्येति ॥ व्रजस्य का कथा, अस्माभिः शब्दस्पर्शादयः सर्वेन्द्रियाणामपि विषयाः सम्यग्वासनोच्छेदपर्यन्तं त्यक्ताः । सन्त्यज्य च पादमूलं भक्ताः। तत्त्यागस्तव पादमूलभजनार्थमेव, न तु फलान्तरमस्माकमपेक्षितमित्यर्थः । सर्वविषयानित्यनेन त्वद्विषयकः कामः कामो न भवतीति ध्वनयन्ति । अस्मदन्तःकरणात् सर्वे विषया यदि निःसृता न स्युस्तव पादमूलभक्तिः कथं तत्राविर्भवेत् तथाच सैव तत्त्यागसाक्षिणीत्यनेन द्योतितम् । यच्च भगवतोक्तं— प्रियं किं करवाणि वः, व्रतागमनकारणमिति तत्राप्याहुः ॥ भजस्वेति ॥ तथाच भवद्भक्तानामस्माकं स्वीयत्वेन ग्रहणमेवास्मत्प्रियं भगवता कर्तव्यम्, एतदतिरिक्तं किमप्यस्माकं प्रियं नास्त्येतदेवास्मदागमनप्रयोजनमतस्तदेव सम्पादयेत्याशयः । तस्मात् प्रतिया-

त भज, नेह स्वेयमिति सागाग्रहो भगवतो नोचित इत्याहु॰ ॥ हे दुरवग्रह, मा सजास्मान्। मद्भजन न कर्तव्यमित्येवमाग्रहो दुष्टो भवति। सर्वै॰ कर्तव्य भगवद्भजन, न कार्यमिति दुष्ट आग्रहो जीवाना वर्तते। परमेश्वरस्याऽप्युक्त आग्रहश्चेद तर्हि कथ जीवानामुद्धार । तस्मादस्माकमेव कवलमभाग्यवशादुक्त आग्रहो भगवता अश्रित इति सम्बोधनाशय । ननु न मया स्वभजन निषिद्धय ते, कि तु कामोपाधिक तदिति चेव तत्राहु॰ ॥ देव इति ॥ यथा, देव आदिपुरुष॰ = अवतारिपुरुषो, ये यथा मा प्रपद्यन्ते तांस्तथैव भजाम्यहमिति * प्रतिज्ञावान् भगवान् यथा मुमुक्षून् भजते तत्तत्फलप्रदानेनाश्रयते स्वस्मिन्नेव स्थापयति, न तु पुनस्तेषा पूर्ववत्स्था सम्पादयति तद्वदस्मदादार्थं तदवतारभूतस्त्वमेवमस्मत्स्वदङ्गसङ्गोत्कण्ठाकाङ्क्षावतीर्मा त्यज, अपि त्वस्मदभिलषितफलप्रदानमाश्रय । तथाच मोक्षोपाधिकमपि भगवद्भजन यथा मुमुक्षुणा भगवता शुद्धत्वेनैवाङ्गीक्रियते तथा त्वदङ्गसङ्गोपाधिकमपि तच्छुद्धत्वेनैवाङ्गीकर्तु योग्याऽसीति भाव । स्वसन्निधित्यागो न कर्तव्य इति वक्तु स्वभक्तत्याग च कर्तु भवान्नार्हति, नाऽपि स उपदेशः सफलो भविष्यतीत्यप्यनेन ध्वनितम्॥अनभिज्ञापक्षे, भो विभो समर्थ एव गदितुमपि भवान्, आचरितु नार्हतीति किमु वक्तव्यमित्यर्थ । यद्यपि परमैश्वर्ग्यवॉस्तथापि परमधार्मिकत्वेन प्रख्यातस्य श्रीनन्दरायस्य पुत्र स्वय च रसार्द्र इति सूचनाय भवानित्युक्तम्। नृशस साक्षा मारकम्।तथाचास्मदुपदेशाय प्रवृत्तेन त्वया यद्भुनाराच कृताऽसरुपातस्त्रीवधजनितपातकोत्पत्तिर्न विचारितेति भावः । अथवा, हे विभो! अस्मत्प्राणनाशोतथाच स्वनाथाऽस्मत्प्राणरक्षणमेव तवोचित, न तु तन्नाशनमिति भाव । तथापि भवान्, मय मा रस्यथ क्षपा * इति कृतप्रतिज्ञ । प्रतिज्ञाय करोमीति कर्तव्य

तदकुर्वत * मिथ्यावचनदग्धस्य इष्टापूर्त्तं विनश्यतीत्यादिशास्त्र मो भवान्। तथाचास्मद्दोषोद्घाटनाय महत्त्वस्य स्वमतिज्ञानाद्यावि ष्कृतदोषाश्च पश्यसि । तदुक्तं शाकु तलया— राजन् सर्षपमात्राणि परच्छिद्राणि पश्यसि * आत्मनो बिल्वमात्राणि पश्यन्नपि न प श्यसीति भावः । ननु, स्वागत वो महाभागा इति परमकामलमपि प्रथम मयैवोक्त तत्किमर्थ विस्मर्यत इति चेत्* । तस्याप्यलङ्कृत्य शिरश्छेदनवन्निवर्तनार्थतया नृशस एवा तर्भावात् । भवतु भव न्मुखचापनि सृतवाग्बाणजालेन दग्धमाणा वयमित. पर परलोक मेव यामो, न तु व्रज, त्व त्वसख्याता अस्मान् हत्वा कि पद मा प्स्यसीति न विद्म इत्याशयेनाहु. ॥ सख्येति ॥ वान्ताशनवत् पुनर्ग्रहणायास्माभि. सर्वविषया न सक्ता इति द्योतनाय समित्यु क्तम् । तथाच, व्रजस्यानामयम् * रजन्येषादिवाक्यजात निर र्थकमेवेति भाव' । ननु किमिमेवमत्युपालम्भ दातु प्रवृत्ताः । प्रिय किङ्करवाणि वः * व्रजागमनकारणमिति मदुक्त श्रुत्वा तू र्ष्णी स्थिता भवतीर्दृष्ट्वा पुनर्गृ तुकामा निष्कामाश्चालक्ष्य, रज ये वेत्याद्युक्त मया । ततो मास्तु कोपो, यत् प्रार्थनीय तन्नि शङ्क प्रा र्थ्यतामितिचेत् तत्राहुः ॥ अस्मान् त्वदतिरिक्तविषयकाङ्क्षारहिता भजस्व स्वीयत्वेन समाश्रयस्व । ॥ सन्त्यज्येत्यादिना, ननु कथ गोप गृहिणीर्वोऽहं भजामीति शङ्काऽपि निराकृता। तव पादमूल भक्ता इत्यनेन, न वय वनशोभादिनिरीक्षणार्थमागता इति—हृष्ट वनमित्या द्युक्त समाहितम् । पादे, पद्मत्वानुक्त्या किञ्चिन्सरम्भेण नृशसवा क्यपादयो काठि य व्यञ्जयन्ति । ननु युष्माभि सर्व यथार्थमे वाभिधीयते, तथापि नाह भवतीर्भजामि, स्वत त्रत्वादितिचेत् त त्राहु ॥ हे दुरवग्रहेति ॥ अयमाग्रहो दुष्टो भवति । स्वत त्रस्यापि तवैवविध आग्रहो नोचित । चतुरशिरोमणित्वात् । दुराग्रहो हि

गूढधर्म इति भावः । अतोऽनन्यगतीरस्मान् मा त्यज, त्यागस्यानिर्वाच्यदोषोत्पादकत्वात् । नन्वस्तु दोषस्तेन मम का हानिरित्याशङ्क्याहुः । अहो किमेवंविधगर्वगिरिशृङ्गमारूढोऽसि । किमाप्तकामादात्मारामात् परमेश्वरादप्याधिक्यं प्राप्तोऽसि, यतः सोऽप्येवं न करोतीत्याशयेनाहुः ॥ देव इति ॥ यथा धर्माद्यनपेक्षः सर्वलोकस्य हारकृत् पापाऽसंस्पृष्टः सकलैश्वर्यसम्पन्नः स्वयम्प्रकाशो ब्रह्मादिकारणभूतः स्वभक्तान् मुमुक्षून् भजते तत्प्रदानेन सेवते, तथा त्वं स्वतः नोऽप्यस्म मनोरथपूर्तिं कर्तुं योग्योऽसीत्यर्थः । मुमुक्षूनित्यनेन ते मुमुक्षवो, न तु तदेकैप्सव इति तेषां स्वतो निकृष्टता सूचयति । यद्वा, अमुमुक्षून् मोक्षाद्यनिच्छून् । यद्वा, मुमुक्षून् तदन्यत् सर्वं त्यक्तुमिच्छून् शरणागतान् । दुरवग्रह इत्यनेन, हे विषमाम्बपरूमेघेत्यप्युक्तम् । अवग्रहो वृष्टिप्रतिबन्ध इति पाणिनिस्मरणात् । दुष्ट — अवग्रहो यस्मिन् स प्रतिषिद्धवृष्टिर्मेघः । तस्य दुष्टत्वं च रूक्षवायुवर्षकत्वात् । तथा चेतरजलस्थानीयस्वपसभिकाङ्क्षाविनिर्मुक्ता मेघस्थानीयत्वदेकशरणाश्चातकीकल्पा वयं त्वदधराऽमृतपानार्थमागतास्त्वं त्वस्मद्भाग्योदयात् सम्प्रति विषं वर्षसि । भवतु, विषमेव पीत्वा मरिष्यामो, न तु व्रजं यास्यामः । चातकीस्वभावत्वात् । तस्माद् अस्मान् मा त्यज । कृतघ्नस्य तव च नेदमुचितमिति भावः । ननु चातकीसमाना भवतीनां मरणेन मम चान्यपेक्षारहितमेघकल्पस्य का हानिरिति चेद्, न त्वं केवलजडमेघसदृशः, किं तु परमाभिज्ञदुःखमोचकमात्रकचेतनरूपपरमात्मसदृशोऽपीत्याशयेनाहुः ॥ देव इति ॥ यद्वा, भक्ता अस्मान् भजस्व दुराग्रहम् आसमं तावत् त्यज । बुद्धे फलमनाग्रह * इत्युक्तत्वात् परमबुद्धिमतस्तवाग्रह एव नोचितो, दुराग्रहस्तु दूरनिरस्त इति भावः ॥ मानिनीपक्षे, एवं = प्रिय किं करवाणीत्यादिरूपं, दृशस

क्रूर गदितु नार्हसीति । यद्यपि भवान् सौन्दर्यादिगुणसागर स्तथापि विभु परमसमर्थस्तथापि परदारा एव न वक्तव्या इति भावः । यदि परदारैरेव तव रमणेच्छा तर्हि या सर्वविषयान् सत्यज्य तव पादमूल भक्तास्ता दुरवग्रह स्वच्छन्द यथा स्यात् तथा भजस्व । अस्मान् आसमन्तात् सर्वप्रकारेण त्यज । यद्वा अस्मान् दुःसाध्या मति दुराग्रह त्यज । प्रभवाऽपि भजमानमेव भजन्त इत्याशयेनाहु ॥ देव इति॥ आदिपुरुषो देवो, यदपेक्षया ऽधिकप्रभुत्वविशिष्ट कोऽपि नास्ति स यथेत्यर्थ ॥

निवृत्तिपक्षे, एव प्रतिरुद्धा श्रुतयः साक्रोशमाहु ॥ मैवमिति ॥ एव ब्रह्मणि श्रुतीना प्रामाण्य नास्तीत्येवप्रायद्रूप नृशस सर्वघातुक गदितु भवान् नार्हति। ननु नाह ब्रवीमि, कि तु शास्त्र तत्त्वाऽनभिज्ञास्ते ते वादिन एव जल्प सऽतो नाऽहमुपालम्भविषय इति चेत् तत्राहुः॥ हे विभो! व्यापक। तथाच, अनेन जीवेनात्मना ऽनुप्रविश्य नामरूपे व्याकरवाणीति श्रुत्या नामरूपात्मकसंसार-विस्तराय तादृशजीवात्मना त्वमेव ब्रवीषीति भाव.। यतः, सत्य-ज्य सर्वविषयाँस्तव पादमूल भक्ता अस्मान् भजस्व। दुरवग्रहम् आसज। नाय मोक्षमार्ग., कि तु परमानर्थाऽसद्भावप्रापक. । असन्नेव स भवति असद् ब्रह्मेति वेदेदेत्यादिश्रुते' । तस्माद् यथा मुमुक्षूणा मोक्ष' स्यात् तथा करुणा विधयसीत्याशयेनाहु. ॥ देव इति ॥ यथा आदिपुरुषो देवो भवान् मुमुक्षून् भजते मोक्षदाता भवेत् तथाऽस्मान् भजस्व। तथाच परमपुरुषार्थमोक्षलाभाय ब्रह्मण्यस्मत्प्रामाण्यमवश्यमास्थयमित्यर्थ । अयमाशय' । सर्वान् विषयान् प्रतिपाद्यान् सम्यक परित्यज्य ब्रह्मणि समर्पितताना श्रुतीनामन्यपरत्वाभिधान साहसमात्रम । तत्र श्रुतिवाक्याना द्विविधा ब्रह्मणि प्रवृत्तिः । एका ब्रह्मात्मनोरेकत्वविषया, अपरा सत्यज्ञाना

दिलक्षणब्रह्मविषया । तत्राद्या यथा, सोऽयं देवदत्त इति पदत्र-यस्यैकस्मिन् देवदत्ते पर्यवसान तद्वत् । तथाहि । यथोक्तवाक्य, सोऽयमिति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशस्यैक्यमात्र-लक्ष्यपरम् । तथा, तत्त्वमसिवाक्यमपि विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशचैतन्यैक्यमात्रपरम् । ननु पूर्वतन्त्रे पदार्थानां संसर्गः, संसृष्टः पदपदार्थो वाक्यमिति वाक्यार्थलक्षणमुक्तम् । तत्र द्विविधमप्यखण्डार्थं न सम्भवति । तत कथं वाक्यार्थलक्षणं यमखण्डं ब्रह्म वाक्यार्थः स्यादितिचेन्न । वेदान्तशास्त्राऽऽचार्यैश्रीबादरायणानुयायिभिः, संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमत. * अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत इति वद-द्भिरखण्डस्य वाक्यार्थत्वाभिधानात् । नचैवं सत्युक्तलक्षणस्य त त्राव्याप्तिः । सामान्यलक्षणस्यैव यावद्विशेषव्याप्तिनियमाद् विशेषलक्षणयोरेतयो' परस्पराव्याप्तेरदूषकत्वात् । सामान्यलक्षणं तु वाक्यममेवत्वमत्राप्यस्त्येव । नवाखण्डवाक्यार्थस्य विशेषलक्षणाभाव. । अपर्यायानेकपदैरेकप्रातिपदिकार्थमात्रपरत्वस्यैव तल्लक्षणत्वात् । ननु तत्त्वम्पदलक्षितरूपे भिन्ने ? किं वा न ? । आद्ये ऐक्यमसम्भवः । द्वितीये पदार्थवाक्यार्थयोरेकत्वापत्तिरिति चेन्न । द्वितीयपक्षोक्तदोषस्यष्टापत्तिग्रस्तत्वात् । नच पदद्वयवैय-र्थ्यम् । लक्षणयैकार्थबोधनार्थत्वात् । त्वम्पदस्य वाच्यार्थपरित्यागेन चिल्लक्षकत्वं तत्पदसामानाधिकरण्ये सति घटते । तथा तत्पदस्यापि वाच्यार्थपरित्यागेन चिल्लक्षकत्वं त्वम्पदसामानाधिकरण्य इति न पदद्वयवैयर्थ्यम् । एवं सत्यज्ञानाद्यवान्तरवाक्येऽखण्डार्थत्वम् । यथा केन चित् पृष्टोऽस्मिज्ज्योतिर्मण्डले कश्चन्द्रो नामेति ?। तस्य प्रतिवचनम्— प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य । अत्र प्रकृष्टशब्दात्र च द्रप्रातिपदिकार्थसिद्धिः।प्रकृष्ट तम इति प्र

कृष्टशब्दस्य प्रकृष्टस तमसऽपि प्रयोगदर्शनात् । तथा प्रकाशशब्दादपि न तत्सिद्धि । खद्योतादावपि तत्प्रयोगदर्शनात् । तस्माद्वाच्यार्थपरित्यागेनाऽप्रकर्षाऽप्रकाशविरोधी च प्रातिपदिकार्थः पद द्वयेन प्रतिपाद्यत इत्यखण्डार्थत्वसिद्धिः । अ यथा च प्रातिपदिकार्थमात्रप्रश्नोत्तरतया विशिष्टमर्थं बोधयतो वक्तुरनवधेयवचनता स्यात् । तथा, निमतम् अखण्डार्थम् । लक्षणवाक्य त्वात् । प्रकृष्ट प्रकाशश्च द्र इति वाक्यवदिति सिद्धम् । यद्यपि प्रमाणा तराभावात् ब्रह्मण्युपनिषदा प्रामाण्यमुक्त, किमबाधलक्षणप्रामाण्य, किं वा प्रमाणा तरसम्भिन्नार्थविषयत्वात् पौरुषेय वेलाक्षेपे प्रामाण्य, किं वा प्रमाणा तरयोग्यार्थविषयत्वात् तत्सिद्धयथार्थानुवादरूपमप्रामाण्यम् । नाद्यः । गृहीतसङ्गतिकस्य पुस सत्यादिवाक्यश्रवणे अबाधितानधिगतार्थप्रमितिदर्शनात् । प्रमाणेन हि प्रमीयमाण स्यार्थस्य प्रमाणान्तरासत्वान्नो न मिथ्यात्वापादकः । सर्वप्रमाणानामनधिगतार्थगन्तृत्वात् । अ यथा चक्षुषा गृह्यमाणस्य रूपस्य त्वचाऽग्रहणान्मिथ्यात्वाशङ्का स्यात् । न द्वितीयः । प्रमाणान्तरसम्भिन्नार्थत्वाभावात् । पौरुषेयवचनप्रयुक्तत्वे हि सम्भेदस्य भूतार्थप्रयुक्तत्वे प्रत्यक्षादीनामपि सम्भेदः स्यात् । नापि तृतीय । स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात् । एव सिद्ध उपनिषदां ब्रह्मणि प्रामाण्ये तद्गताना पदानामर्था तरकल्पना न युक्ता । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषा कर्तृस्वरूपप्रतिपादनपरता वक्तु शक्या । तत् केन क पश्येत्, एकमेवाद्वितीयमित्यादिना क्रियाकारकफलादेर्निराकृतत्वात् । नापि ब्रह्मण उपासनाविधिशेषत्व सम्भवति । एतेन हेयोपादेयशून्यत्वेन क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः । यद्यप्य यत्र वेदवाक्याना विधिसस्पर्शमन्तरेण प्रमाणत्व न दृष्ट, तथापि ब्रह्मात्मविज्ञानस्य

फलपर्यन्तत्वात् तत्तद्विषयस्य शास्त्रस्य प्रामाण्य शक्य प्रसाख्यातुम् । हितशासनाच्चोपनिषदां शास्त्रत्वमिति सङ्क्षेप. । एतेन, स्वागतमित्याद्याक्षेपो निरस्त. । यत्तु— रज येषेत्यादि, तत्तु यथार्थमेव । तत्र निद्रितानामज्ञानामपेक्षया ब्रह्मणो निशातुल्यत्वात् । तदुक्त— या निशा सर्वभूताना तस्या जागर्ति सयमी * इत्यादि । यत्तु— मातर इत्यादि, तदपि तु, असत्येव स भवति असद् ब्रह्मेति चेद्वेदेत्यादिना मात्रादितुल्यत्वाभिमानिनामास्तिक्यम्म यानामसत्त्वाभिधानेन तेषां भयोत्पादनस्य समुचितत्वात् । योऽपि— दृष्टुंवनमित्यादिनोपहासः, सोऽपि साहसमिव घनः । अ तःकरणतद्धर्माणां ह्रासवेश्यत्वात् । अधिकार्यभावे, निचाय्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेत्यादिश्रुतीनां निरालम्बनतापत्तेश्चेति दिक् ॥ ३१ ॥

यदप्युक्त, तद् यात मा चिर गोष्ठ शुश्रूषध्व पतीन् सतीः भर्तु शुश्रूषण स्त्रीणा परो धर्मो ह्यमाययेत्यादि तत्राप्याहुः ॥

> यत् पत्यपत्यसुहृदामनुवृत्तिरङ्ग !
> स्त्रीणा स्वधर्म इति धर्मविदा त्वयोक्तम् ॥
> अस्त्वेवमेतदुपदेशपदे त्वयीशे
> प्रेष्ठो भवास्तनुभृता किल बन्धुरात्मा ॥ ३२ ॥

यदिति ॥ यत्पत्यपत्यसुहृदामनुवृत्ति' स्त्रीस्वधर्म इति धर्मविदा त्वयोक्तमेतदुपदेशपदे त्वय्येवमेवाऽस्तु । अङ्ग ! हे भगवन्निति कोमलाम न्त्रणेन, न वय प्रातिकूल वदाम इति सूचयन्ति । त्व हि उपदेशविषय । त्वद्बुद्ध्यैव पत्यादिसेवा म उत्कृष्टफलप्रदमतः साक्षाद्भगवति सति कि परम्परयेति भाव. । यत, ईशो, विविदिषा

वाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः । यद्वा, ईशो ऽन्तर्यामिणि । जीवो हि यत्रान्तर्यामिरूपेण त्वया प्रेर्यते तत्रैव प्रवर्तते । अतः स्वसङ्गमार्थं त्वयैव प्रेरिता वयं त्वदाराधन समीहामहे । तस्मादन्तर्यामिरूपेण स्वाराधने प्रेरण, प्रेष्ठरूपेण पश्चादाराधने इसस्मदृष्ट्याकुलताऽऽपादिका प्रवृत्तिर्भगवतो नोचिता । अन्तर्यामिकृतप्रेरणस्यैव प्रबलत्वादिति भावः । किञ्च, उपदेशानियोज्य उपदेशविषयश्च त्वमेवातस्त्वदाराधने नास्ति किमपि बाधकमित्याशयेनाह ॥ प्रेष्ठ० = परमप्रेमास्पदम् । अत एवात्मा, परमप्रेमास्पदस्यैवात्मत्वात् । स च तनुभृतां सर्वेषां तनुर्न तु यस्य कस्य चित् । अतः सर्वेषां बन्धुरूपो भवान्नः सम्प्रत्यस्मदनुग्रहार्थं नन्दनन्दनविग्रहस्तस्मादुपदेशकर्तृतदनुष्ठातृतद्विषयात्मनस्त्वदाराधनमेव मुख्य सर्वाराधनमिति भाव । यद्वा, त्वय्युपदेशपदे धर्मोपदेशकर्तरि सति अस्मासु धर्म जिज्ञासमानासु सतीषु एतत् त्वयोक्तमेवमस्तु । न तु वयं तथा, नापि भवान्, किं तु भवानात्मेति । अथवा, एतदुक्तमुपदेशपदे पुरुषेऽस्तु नाम, त्वयि तु ईशो स्वामिनि सति एवं न, नैवमित्यर्थः । यद्वा, उपदेशपदे उपदेशेन न निवर्तनीये लौकिकपुरुषे आसक्तचित्तत्वे एतदेवमस्तु, ईश्वरे त्वयि तु नैवमित्यर्थः । यतस्तनुभृतां त्वमात्मा फलरूप । अथवा एवमेतत् त्वय्येवाऽस्तु । कुतः । उपदेशपदे आराधनीयत्वेनोपदिश्यमानानां पत्यादीनां पदे अधिष्ठाने । यत, ईशे । न हीश्वरमधिष्ठानम् ऋते कोऽपि पतिपुत्रादिर्नाम । अध्यस्तस्याधिष्ठानानतिरेकात् । तस्मान्न वयमनुचिते कर्मणि प्रवृत्ता इति भावः । यद्वा, यत् त्वयोक्तमेतदेवम् आदावुपदेशकर्तरि आचार्ये त्वय्यस्तु । आचार्यसेवनपूर्वकस्यैव धर्मानुष्ठानस्य सफलत्वप्रतिपादनात् । तत्रापि ईशे परमेश्वरे । एवमप्याचार्यः स्यात् तर्हि किमु

पक्तव्यम् । ईश्वरत्वादेव तनुभृतामात्मा । तत एव प्रेष्ठस्तत एव
ब धु सुहृत् । सात्मकानामन्न पक्वादीना सेवन दृश्यते, न तु मृ
ताना तेषाम् । तद्दाहविधानात् । अतोऽस्मद्भाग्यवशात् सदान दा
ऽऽत्मैव प्रकटितस्तस्मात्त्वत्सेवन प्रवृत्तानामस्माक किं तैरिति भाव‌ः ।
अनभिज्ञापक्ष, अधिकारमबुद्ध्वैव धर्ममुपदेष्टु प्रवृत्तोऽसि । निस्त्रै
गुण्ये पथि विचरता को विधि को निषेध * इत्युक्तत्वाद् ब्रह्मज्ञा
नामस्माक विधिनिषेधाधिकाराभावादित्याशयेनाहु. ॥ यदिति ॥
इति यद्धर्मविदा त्वयोक्तमेतदुपदेशास्पदे तदेकस्वभावे एवमस्तु
क्रियताम् एवमुपदेशो, न वय निवारयाम‌ः । परन्तु स्वाधिकाराभा
वान्न त गृह्णीम इति भाव. ॥ धर्मविदेति ॥ धर्मस्वरूपमात्र वेत्स,
न तु तदुपदेशाधिकारम् । यद्वा, अथापि धर्मविदसि, न तु ब्रह्म
वित् । अत एव अवोचीति सोपहास व्यङ्ग्यम् । यद्यपि निवारण
मुचितमधिकार विनाऽरण्यरोदनप्रायस्योपदेशस्य निषिद्धत्वात् ।
तथापीश्वरत्वात् तत्र नास्त्यस्माक निवारणसामर्थ्यमित्याशयेनाहु‌ः ॥
ईश इति ॥ यद्वा, अधिकार विनोपदेशकर्तृत्वमनुचितमपि प्रभु
त्वान्नो विरुद्ध्यते । ननु, वामैव विभुतेत्युक्तत्वेन विभुताया. कुटि
लप्रवृत्तिजनकत्वावगमाद् अधिकाराऽभावसाधकमात्मानुभवमावेद
यन्ति ॥ प्रेष्ठ इति ॥ अस्मत्प्रेष्ठो भवानेव । सर्वेषा तनुभृता ब धु
र्हितैषी परमात्मा आत्मा च । यद्वा, सर्वेषा परप्रेमास्पदभूतो य आत्मा
यश्च सुहृत् परमेश्वर स, तत्त्वमसिवाक्ये तत्त्वम्पदोपलक्षितो
भवानेव । तथाचाखण्डवाक्यार्थबोधवतीना कुतस्त्वदुक्तधर्मेऽधि
कार, कुतश्चाऽशुभसम्बन्ध‌ः । पश्यत' सर्वभूतानि सर्वावस्थासु
सर्वदा * ब्रह्मभूतस्य सयोगो नाऽशुभस्योपपद्यत इत्यादिशास्त्रादि
ति भाव । ब्रह्मज्ञम्मन्याना पक्षमवलम्ब्येयमुक्तिर्द्रष्टव्या । तेषा
तदभिमानेन यथेष्टाचरणे प्रवृत्तिदर्शनात् । तदुदाहरण तु—प्रेक्षैव

सर्वमिति वेदविदो वदन्ति तस्माच्च मे सखि परा‍ऽपरभेदबुद्धिः ॥
जारेऽथवा निजवरे तदशोऽनुरागो व्यर्थं किमर्थमसतीति कदर्थ
य तीत्यादि । यद्वा, स्त्रीणां स्ववर्म इति यत्‌ त्वयोक्तमेतदुपदेशपदे
त्वय्यस्तु । एतदुपदेशविषयो भवानेवाऽतो न वयमुपदेशनीयाः ।
ननु मम कुत उपदेशविषयत्वमित्याशङ्क्य सौ दर्य्यमाधुर्य्यादिगुण
गणालङ्कृतस्यास्मच्चित्ताकर्षकस्य तवैतच्चित्तत्वमेवास्मद्धर्मनाशे प्र-
योजकमिति भावः । यद्वा, इति यत्‌ त्वयोक्त तदस्माक मनसि न
प्रविशति । यतस्त्व धर्मविच्च तु तदनुष्ठाता । यो यस्य धर्मस्यानु
ष्ठाता न भवति, केवल धर्मं जानाति, न तद्वाक्यात्‌ कस्यचित्‌
तस्मिन्‌ धर्मे प्रवृत्तिर्भवति । अत. काचिन्महाभागा पातिव्रत्य
धर्मानुष्ठानपरा यौधिष्ठिरात्ऽस्मानुपदिशेच्चेत्‌ तर्हीस्म मनसि तद्
वाक्य प्रविशेदत किमर्थं जल्पसीति भाव. । अस्मद्वाक्यमेतासा
हृदि प्रविशत्विति यदि तवाग्रहस्तर्हि तदुपदेशपदे गुरौ त्वय्यस्तु । तथा-
च विष्णुना यथा मोहिनीरूप धृत तथा त्वमपि स्त्रीरूपमादाय
स्त्रीधर्ममाचर, ततोऽस्मानुपदिशेति गुरुर्नुष्ठिते कर्मणि शिष्यभूताना
मस्माकमपि प्रवृत्ति' सौकर्य्येण भविष्यतीति भावः । नन्वनुष्ठा
याऽप्यहं दर्शयामि, पर तु किं कर्तव्य ? स्त्रीत्व नास्ति ममेतिचेत्‌
तत्राहु. ॥ ईश इति ॥ सर्वकलासमर्थे त्वयि स्त्रीभावोऽपि न दुर्घट
इति भाव. ॥ ननु कपटेन गृहीतस्त्रीभावस्य मम पाणिग्रहीतुरल
भ्यत्वात्‌ कथ पातिव्रत्यधर्मानुष्ठानमिति चेत्‌ तत्राहु' ॥ प्रेष्ठो भ
वान्‌ ॥ स्वभावत एव प्रियो मनोहरात्मा च। तथाच यथा मोहि या
जानन्नपि कपटस्त्रीभाव, स्वाभाविकस्त्रीभावा परमप्रियामुमा विहाय
सन्दग्धकाम परमजितो द्रयोऽपि श्रीरुद्रस्तद्ग्रहणायाधावत्‌, तथा
लोकोत्तरसौ दर्य्यवति त्वयि कपटेनापि गृहीतस्त्रीभावे जाते तोऽपि
कोऽपि स्वस्वदारान्‌ परित्यज्य त्वद्ग्रहणाय धाविष्य त्यतो न

पतिदौर्लभ्यमिति भाव । अनेनाहो विधात्रा धर्मविनाशायैव त्व रचितोऽसि । पुरुषस्ते स्त्रीणां धर्म नाशयसि, गृहीतस्त्रीभावे पुरुषाणां तथाशाशयिष्यति । धर्ममनुष्ठातु तु त्वं कदापि न समर्थोऽसि । यथेदानीं पुरुषधर्ममेकपत्नीव्रतलक्षणमनुष्ठातुमशक्तो, बह्वीनां स्वस्मिन्नासक्तत्वात् । तथा गृहीतस्त्रीभावेऽप्यसंख्यातपुरुषाणामासक्तिजनकत्वात् । तस्मादनुष्ठाय उपदेष्टुमशक्तस्त्वं किमर्थं वृथा कण्ठशोषणाय प्रवृत्तोऽसीत्यपि ध्वनितम् । यद्वा धर्मविदा त्वया इति यद्युक्तमेतदुपदेशपदे त्वयि एवमस्तु, त्वदङ्गेष्वेव जीर्णं भवतु । ग्राहकाभावात् । अहो ज्ञातमस्माभिर्नवीन धर्मवित्त्वं त्वया सम्पादितमत शिष्या सम्पादनीया । यथोक्तधर्मश्रोपदेष्टव्य इति तव महत्युत्कण्ठा वर्तते । ततोऽस्मानेवमुपदेष्टुं प्रवृत्तोऽसि । परन्तु न वय त्वां गुरु कर्तुं समागता, अत. किमर्थमपात्रदानात् स्वधर्म नाशयसि । अप्रतिपित्सितमर्थं प्रतिपादयन्ननवधेयवचनो भवति । तथाच धर्मविद् यद्यपि जातोऽसि, तथाप्यधिकारानधिकारविवेकलेशनापि रिक्तोऽस्यत. सम्प्रत्येतत् त्वयि तिष्ठतु । गुरोः सकाशाद् यथोक्तविवेकमपि लब्ध्वैतदधिकारलाभ सुखेनोपदेशं करिष्यसीति भाव । यत्तत्त्वमीश ॥ यथोक्तोपदेशधारणेऽधिकारस्त्रीकारेऽधिकारसम्पादने च समर्थं । भवसस्तर्हि किमर्थमागता इतिचेत् तत्राहु ॥ तनुभृतां सर्वेषां चतुर्दशभुवनस्थानां गौ दर्प्यादिविशिष्टविग्रहवतां मध्ये भवान् मनोहरस्वरूपोऽतोऽस्माकं प्रेष्ठ' । तथाच त्वयि रमणबुद्ध्या समागता वयमतो न यथोक्तोपदेशार्हा इति भाव ॥ मानिनीपक्षे, पत्यावनुवृत्तिलक्षण. स्त्रीणां स्वधर्मइति त्वयोक्तम् एतदुपदेशकर्तरि समर्थे त्वय्येनमस्तु । सर्वदैवमेव त्वया वयमुपदेशनीया । धर्मविदेत्यनेन अहो ज्ञातम् अद्यास्माभिः— त्व धर्मविदसीति सूचितम् । यतस्त्वमुपदेशकर्तृत्व तव यत

स्मिन् प्रेमकृतं शुभपथ्येव प्रवर्ते ते सज्जनैरिस्ताशयेनाह ॥ प्रेष्ठ इति ॥ भवान् प्रेमविषयो यथा बन्धु । यथाक्तोपदेशकर्तृत्वाद् हितैषी । अत आत्मा स्वात्मतुल्य । तथाच, क सकभर्ता, श्रुश्रूषणीयः क, को वा कपन्थेतसादिविवेकवतीनाम् अस्माकमग्रे स्वपाण्डित्य नोद्घाटनीयमिति भावः । यद्वा इति यत् त्वयोक्तमेतदेव सुपदेशपदे त्वय्यऽस्तु । त्वमपि स्वधर्ममाश्रित्य तिष्ठ, न त्वस्माक स्वस्य च धर्मं नाशयसि भाव । यतस्त्वमीशो नाशसरक्षणयोः समर्थ । यदि तु मद्भिरस्नेहवतीना न स धर्मः, कपटपूर्वकत्वादिति तत्राहुः ॥ प्रेष्ठ इति ॥ तनुभृता सर्वेषा प्राणिना भवान् आत्मवत् प्रेष्ठ । यतः सर्वेषा हितैषी । तथाच सर्वेषा तनुभृता यथा त्वयि प्रीतिस्तथाऽस्माकमप्यतो विशेषप्रीतिभ्रमादस्मासु दोषमारोप्यऽस्मद्धर्मं नाशयितुमयोग्योऽसीति भावः ॥

निरुक्तिपक्षे, एव साक्षाद्ब्रह्मप्रतिपादकश्रुतिभिः स्वस्य ब्रह्मणि सम-त्वयोऽभिहित इदानीम्, इ द्रो यातोऽवमितश्च राजा, अग्निर्मूर्द्धा दिव इत्यादिका श्रुतयः स्वाभिप्राय ब्रह्मण्यावदयन्ति ॥ यद्विति ॥ यत् स्त्रीतर्मिकाणा श्रुतीनामिं द्रादिप्रतिपादिकानाम स्माकमि द्राद्यनुवृत्तिसतात्पर्येण तत्र प्रवृत्ति स्व ग्रम इति धर्मविदा त्वयोक्तम्, एतदेव त्वय्यस्तु । यत उपदिश्यमानानामि द्रादीना पदे अधिष्ठाने, यत ईश्वरे सर्वकारणभूते । यतश्च भवान् प्रेष्ठत्वात् तनुभृता सर्वेषामि द्रादीनामात्मा तद्वत् धुस्तःसम्य धीन्द्रादिविग्रहरूपश्च । तथाच किमपि ध्वकारजात प्रतिपाद्य स श्रुतयः सर्वाधिष्ठानभूत सर्वात्मान सर्वस्वरूप परमात्मान तमेव प्रतिपादयन्ति सर्वे वेदा यत् पदमामनन्तीत्यादिश्रुतेरिति भावः ॥ ३२ ॥

स मार्गे प्रवृत्ता वय प्रशस्या, न तूपालम्भयोग्या इत्याशयें सदाचार प्रदर्शयन्ति ॥

कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्म-
न्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥
तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या-
दाशां धृतां त्वयि चिरादरविन्दनेत्र ! ॥ ३३ ॥

कुर्वन्तीति ॥ कुशलाः कर्तव्याकर्तव्यादिविवेकवन्तः, किं प्रजया करिष्यामो येषां नोऽयमात्मा लोक इत्यादिश्रुतेस्तत्त्वविदः पुरुषैरेया नारदादयो, योषिद्वरा गार्गीसुलभाद्याश्च त्वयि रतिं कुर्वन्ति । यतः, स्वे स्वस्वरूपभूते आत्मनि, अत एव नित्यप्रिये । अन्यत् सर्वं यदा स्वात्मानुकूलं भवति तदा प्रियं भवति, न तु सर्वदा । स्वात्मा तु सर्वदैव प्रियः । तथाचैवम्भूते त्वय्येव रतिरुचिता । तत्तस्योऽभूतत्त्वमेति, यदात्मरतिरेव स्यादात्मतृप्तश्च मानवः * आत्मनैव च स तुष्टस्तस्य कार्यं न विद्यते * इत्यादिश्रुतेः । अतः पतिसुतादिभिः किं मोक्षप्रतिबन्धकैः, किं प्रयोजनम् । न धनो द्वव धनम् * इत्युक्तत्वात् । अत्युतार्तिदैः सम्प्रति वियोगादिना जन्मादिसंसृतिचक्रनिक्षेपणादिना चाऽऽर्तिमदायकैः । ये हि संस्पर्शजा भोगा दुःखयोनय एव ते * इत्यादिशास्त्रात् । एवं यथोक्तनिर्दिष्टपक्षमुपपाद्य पूर्वदिकृत्याः प्रार्थयन्ते ॥ तदिति ॥ यस्मात् पतिपुत्राद्यनुवृत्तिर्निन्दिता, त्वदनुवृत्तिर्विहिता सदाचारप्राप्ता चाऽतोऽस्माभिर्योग्यमेव कृतम् । तस्मान्नोऽस्मान् प्रति प्रसीद । ननु मयि प्रसन्ने किं भवतीति चेत् तत्राहुः ॥ हे परमेश्वर' ब्रह्माद्यधीश्वर त्वयि प्रसन्ने पुरुषार्थचतुष्टयमपि सिद्धयति । अकामः सर्वकामो वा मोक्षकाम उदारधीः * तीव्रेण भक्तियोगेन भजेत पुरुषं परम् * इत्युक्तत्वात् । ननु भवतु, प्रसन्नोऽह

युष्मभ्य मोक्षं ददामीति चेद्, न वय सम्प्रति मोक्षकामा इत्याशयेन आहु ॥ मा स्मेति ॥ चिराद् रामाऽवतारादारभ्य त्वयि धृताम् अस्माभिः सह रमणं करिष्यतीत्येवं रूपाम् आशा भवान् मा च्छिन्द्यात् । आशापूर्तिरेव प्रभुभिः क्रियते, न तु तच्छेद इति प्रसिद्धि-द्योतनार्थ— स्मेति ॥ ननु सर्वात्मभाव जानतीना युष्माकं स्व-पतिरूपेण मया रमणेन सन्तोषः किमिति न भवतीति चेत् तत्राहु ॥ हे अरविन्दनेत्र ॥ अनावृतब्रह्मात्मभावेन तुच्छीकृतकोटिकाम विग्रहेण पुण्डरीकाक्षेण भगवता त्वया रमणाभिकाङ्क्षावत्यो वय, न त्वावृतब्रह्मात्मभावैर्मलमूत्रादिविग्रहैः स्वपतिभिः । अत एत त्स्वरूपेणैवास्मदाशापूर्तिर्विधेयेति भाव । यद्वा, अरविन्दनेत्र ! श्री रामचन्द्रविग्रहदर्शनजन्यैतद्विग्रहसङ्गमाऽऽशापूर्तिमेतद्विग्रहेणैव कर्तुं योग्योऽसीति सम्बोधनाशय. ॥ वरदेश्वर इति पाठे वरदानामी श्वर' । श्रीरामचन्द्रात्मना वने स्थितस्य तव दर्शनमात्रेणैव वर मेव लब्धत्वादिदानी तत्साफल्यमपेक्षितमिति भावः ॥ अनभिज्ञा पक्षे, यथोक्तात्मज्ञपक्षमवलम्ब्य यदुक्त तत्र सदाचारप्रमाणमाहु ॥ कुर्वन्तीति ॥ कुशला मनीषिणो नित्यप्रिये स्वात्मभूते त्वय्येव रति कुर्वन्ति, पतिपुत्रादिभिरार्तिदैः किमिति विचार्य्य, तत् त-स्मान्नः प्रसीद । यतस्त्व परमसमर्थ , त्वत्प्रसादो न निष्फल इति भावः । वरदेश्वर इति पाठे, प्रयेमा रस्यथ क्षपाः इति त्वया वरो दत्तस्त सार्थक कर्तुं समर्थ इति भाव । तस्मादाशाच्छेदोऽस्म त निषिद्ध इत्याहुः ॥ मा स्मेति ॥ चिराद्, बाल्यभावमारभ्य त्वयि धृतामाशा भवान् मा च्छिन्द्यात् । हे अरविन्दनेत्र ! परमसुन्दर ! तथाच लोकोत्तरसौन्दर्यादिविशिष्टो भवानेव अस्मदन्त करणे प्रविश्याऽऽशामुत्पादितवान् । अतः स्वेनोत्पादिता स्वगुणैर्वर्द्धिता स्वेनैव पूरयितु योग्यामाशालक्षणां लता फलकाले कर्णकठोरो-

स्यादिकुठारेण छेत्तु नार्हसि ।यतो, त्रिषष्टक्षोऽपि सवर्द्धर्यं स्वय छेत्तुमसाम्प्रतम् * इति यायजानात्येवेति भाव । स्वस्मिन्नात्म ज्ञ्बोच्छेपेण यदि त्व भूतिकामस्त्वाशाध्यापूर्तिरूपमस्मत्पूजनमवश्य कुरु । आत्मज्ञमर्च्चयेद् भूतिकाम इति श्रुतेरिति भानितम् । यद्वा, य एतस्मिन् महाभागा* इत्यादिगर्गोक्तिमनुस्मृत्याहु ॥ कुर्वतीति॥कुशला महद्भाग्यलब्धमारासारविवेकास्त्वयि रति कुर्वन्ति । यत स्तोये आत्मनि अ तःकरणे नित्यप्रिये, यद्वा नित्य प्रिये स्वस्मिन् परस्मिंश्च नित्यप्रिये त्वयि ।अतस्तद्विपरीतै स्त्रीये आत्मनि चार्तिदैर्दु खमदे पत्यादिभिरस्माकमपि कुशलाना किं प्रयोजनम् । तत् तस्मात्, प्रसीद । त्वयि चिराद् धृताशाशा भवान् मा छिन्द्यात् । सर्वं परित्यज्य त्वदाशया जीवाम । तदुच्छेदे त्ववलम्बनाभावात् सद्य एव मरिष्याम इति भाव । ननु भवतीना नाद्यापि तथाविधममातिरेको दृश्यत इत्यत एव अवीमीति चेत् तत्राहु ॥ हे अरविन्दनेत्र ! अहो ज्ञातमस्माभि , भो सखे! रजनीय, भवॉश्चारविन्दनेत्र । अतो मुकुलितनेत्रकमलत्वादस्माक मेम्णः परा काष्ठा न पश्यसीति सनर्म व्यङ्ग्यम् ॥ मानिनीपक्षे, ननु सर्वेषा प्राणिनामह प्रेष्ठ इति यदि मन्यध्ये जानन्ति तर्हि स्वाधिकारानुरूपा रति कुतो न कुर्वतीत्याशङ्क्याहु ॥ कुर्वतीति ॥ कुशला, स्वधर्मनिपुणा साध्व्य , आर्तिदे — दो अवखण्डने। दु खच्छेदके पत्यादिभिर्हेतुभूतै स्त्रीयेगृहादौ आत्मनि च नित्यप्रिये सति, त्वयि रति रमणबुद्धि कुर्वन्ति किम् ? । अपि तु न कुर्वतीत्यर्थः । तत् तस्मान्न प्रसीद । हे परमेश्वर ! व्रजाधीश्वरपुत्र ! त्वा त्वत्प्रसाद मार्थयाम इति भाव ।पाठा तरे, हे वाञ्छितपद । प्रसादमेवाहु ॥ चिराद् वयमत्र, मा आस्म = न तिष्ठाम ।अति रूप ञा दमम्। शीघ्र गृहान् ग तुमनुजानीहीत्यर्थ ।

ननु चिरकालमारभ्य ममाऽऽशा वर्ततेऽत एव न वाच्यमिति चेद तत्राहुः ॥ आशामिति ॥ चिराद त्वयि धृता स्थिताम् । धृढ् अवस्थाने अस्मत्सङ्गाशाम्, अत. परं भवान् छि द्यात । यतो, हे अरविन्दनेत्र ! ॥ कमलवद्विशालनेत्रस्य प्रसन्नमस्माक स्वधर्मनिष्ठता पश्यतोऽस्य ताऽसाऽयेऽर्थे मार्थना नोचितेति भावः । यद्वा कुशला. स्वयि आत्मनिनिलयमियेऽपि त्वयि पत्यादिभिर्नु खनिवारकैर्हेतुभूतै रति कुर्वी त किम । अपि तु न कुर्वी त। समानमन्यद। यद्वा, साध्वी खलयुता भ्रातृमती भर्तृप्रिया बहु * असाध्या सा भवेन्नारी गर्जनीयाऽपमृत्युदेत्युक्तममास्यालक्षण स्वस्मिन् सूचयन्त्य आहु ॥ कुर्वन्तीति ॥ अहो कुशला अस्मदादाय पत्यादिभिः स्वयि आत्मनि देहादौ नित्यप्रिये तत्करणीयप्रीतिविषये सति रति कुर्वी त किम ?। तत्रापि आर्तिदै. ॥ पापसम्भावनयापि परम पीडाप्रदै. । समानम यद । यद्वा, तिष्ठतु पतित्वविचार, प्रीतिविचारश्च । भस्माक तु सर्वतो विरक्ति सम्पाद्यात्मरति. कर्तव्येति सता मद्यचित्दर्शनेन सम्प्रति मनीषा वर्तत इत्याशयेनाहु. ॥ कुर्वन्तीति ॥ तु अपि इति छेदः । अयि, हे सौम्य ! हि प्रसिद्धम् । कुशलास्तु स्वे वस्तुत. स्वरूपभूते आत्मनि नित्यप्रिये रति कुर्वन्त, न तु तद्विपरीते देहादौ । नोऽस्माकम् आर्तिदैरपत्यादिभिः किं प्रयोजनमिति विचार्य्य कथ रति कुर्वीतेत्यपेक्षायामाहुः ॥ तदिति ॥ यत सर्व तु स्वस्वरूप तस्माद्, हे परमेश्वर ! त्व प्रसीद । प्रसन्नो भूत्वा वय विषयाऽऽशया त्वयि मा आस्म । त्वदन्यभूता वय न स्थितास्तामाशा, हे अरविन्दनेत्र ! भवान् छिन्द्यात् । हे ईश्वर परब्रह्मविषया मा प्रमा छि द्यादिति वा । यद्वा, हे अरवि दनेत्र ! परमेश्वरविषयिणी मा प्रमा चिराद कालमारभ्य धृता स्वीकृता त्रिपयाशा छि द्यात। ततस्त्वयि, आस्म त्व

दनन्या भवामेत्येवम्प्रकारेण रतिं कुर्वन्तीत्यर्थः । यद्वा, भा॰ चतुरशिरोमणे, नेयं परदारेषु रत्याशा शोभना । कुशलास्तु स्वपतिभार्यादावपि रतिं विहाय त्वात्म येव रतिं कुर्वन्तीत्याशयेनाहुः ॥ कुर्वन्तीति ॥ तस्मात् त्वमपि प्रसीद, किमर्थं ग्लायसीति भावः । प्रसादे सर्वदु:खाना हानिरस्योपजायते * इति प्रसिद्धया प्रसादे सति, हे परम ! हे अरविन्दनेत्र ! ईश्वर ! परमा चिरात् त्वयि अवस्थिता सर्वदु:खनिदानभूतामाशा छिन्द्यादित्यर्थः ॥

निवृत्तिपक्षे, प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म * एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति * पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् * एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य * तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति * भिद्यते हृदयग्रन्थिरित्याद्या श्रुतयो वैराग्यादिसाधनसम्पन्नास्त्वय्येवात्मनि परमात्मस्वरूपे प्रत्यगभिन्ने, यतो नितान्तप्रिये रतिं, आत्मिदं पत्यादिभिर्न किं प्रयोजनमिति विचार्य्य, तस्माद् हे परमेश्वर ! चिरादनादिकालादारभ्य त्वयि धृतामाशामभिमाय कश्चिदपि मा च्छिन्द्यात् छेदनपरं परमेश्वरेण त्वया दण्डनीय इति सम्बोधनाऽऽशयः । यद्वा, तद् त स्थितेन त्वया तच्छेदनाय स न प्रेरणीय इत्याशयेनाहुः ॥ हे अरविन्दनेत्र ! सर्वहृत्कमलप्रकाशन ! इति ॥ ३३ ॥

यदपि वनदर्शनार्थमागतास्तस्य च जातत्वादित पर मति यातेत्युक्तं तत्राऽऽप्याहुः ।

> चित्तं सुखेन भवताऽपहृतं गृहेषु
> यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥
> पादौ पदं न चलतस्तव पादमूलाद्

याम कथं व्रजमथो करवाम किं वा ॥ ३४ ॥

चित्तमिति ॥ गृहादिषु यच्चित्तं सुखेन निर्विशति तत् त्वयाऽपहृतम् । एवमग्रेऽपि । यद्वा, तदपहारे न भवतः प्रयास इत्याशयेन आहुः ॥ सुखेनाऽऽनन्दस्वरूपेण । तथाच साक्षादानन्दस्वरूपे त्वयि लब्धावस्थानं चित्तं गृहेऽपि न निर्विशति दूरे वनदर्शनादौ तत्प्रवेशः । तथा करावपि गृहोचितकृत्ये न निर्विशतः । दूरे पुष्पफलाद्युपचयः । न हि तस्करहृतः कस्मिंश्चिदपि कर्मणि केनचिन्नियुज्यत इति भावः । तथाच तव पादमूलात् तत्समीपात् पादौ पदं न चलतः । नाऽयं गच्छतः । तत्र पादमूलादित्यनेन त्वत्पादसाहित्ये चेत् तदा सर्वत्र गन्तुं शक्ताविति सूचितम् । अतो गमनसाधनाभावाद् व्रजं कथं याम । ननु भवतीनां पद्भ्यां गमनसामर्थ्यं नास्ति चेत् तर्हि शकटादिना प्रेषयिष्यामीति चेत् तत्राहुः ॥ करवामेति ॥ अथो अथ तत्र गत्वा किं करवाम तत्तद्व्यापारसाधनचित्तादेस्त्वयाऽपहृतत्वादिति भावः ॥ अनभिज्ञापक्षे, न वयं त्वच्छोभाऽऽशादिदर्शनार्थमागताः, नापि तव सङ्गमार्थमपि तु चोरितं स्वचित्तं ग्रहीतुमागता इति नर्म व्यञ्जयन्त्य आहुः ॥ चित्तमस्माकमपहृतम् ॥ केनेति चेत् तत्राहुः ॥ भवता ॥ चोरचक्रवर्तिना । ननु भवत्योऽसत्यं मिथ्यावादिन्यः । वारस्थेन हि मया तदायामरहितेन कथमपहृतमिति चेत् तत्राहुः ॥ सुखेनाऽनायासेन । वेणुरवादिमात्रसद्भावे तदपहरणे को वा तव प्रयास इति भावः । न चेदं स्वल्पम्, एतदपहारेण सर्वस्यापि गृहादेर्लुण्ठितत्वाद् इत्याशयेनाहुः ॥ यच्चित्तं गृहेषु सर्वेषु बाह्येषु इन्द्रियरूपेषु च निर्विशेषेण न्यवसत् तदपहृतमित्यर्थः । अत करावपि यौ गृहकृत्येषु निर्विशतः । चेत्यनेन नेत्रादीनामपि सङ्ग्रहः । ननु ममेति

गच्छत, इत्थं पश्यतो वा दास्यामीति चेत् तत्राहुः ॥ पादौ तद्विना तव पादमूलात् पदं न चलतः । धूर्तस्य चोरस्य त्यागो न न्याय्य इत्यपि ध्वनितम् । अथा अतो व्रज कथं याम, गत्वा च कि कर वाम । सर्वसाधारणचित्तरूपधनाभावादिवर्थं । यद्वा, किं वा करवा म । चित्ताद सर्वस्यापहारात् । चौरं भवन्तं माम्यापि तदादाय, त्वा ग्रहीतु, नेतु, राजाग्रे, आक्रोशनाय त तु चाशक्तत्वात् । स्त म्भनादिमन्त्रेऽलौकिकचौरे किं करवामेति भावः । यद्वा, सुखरूपे ण भवता चित्तादेरपहरणात् गृहादीनि ज्वलन्तु, समृद्धयन्तु, किं मस्माकं तैरनस्त गामाप्यस्मदग्रे नाच्चारणीयमितिभावः। मानिनी पक्षे, ननु तिष्ठतु वाद', समस्तेव भवत्य' समागता रात्राववश्य विश्रम्य प्रातर्गमिष्यथेति चेत् तत्राहुः ॥ चित्तमिति ॥ सत्यमुक्त त्वया, तथापि गृहेषु भवता जायमानेन सुखेन चित्तमस्माकमपह तम्। यद्वस्माद् गृहकृत्येषु निर्विशति करावपि तत्र निर्विशत' । ननु भवतु तथाप्यतिसुकुमारत्वात् पदमपि गन्तुमशक्ताभ्यां पद्भ्यां कथं गमिष्यथेति चेत्तत्राहुः ॥ पादो तव पादमूलात् कथं पद न चलतः, किन्तु चलत एव । तत कथं व्रज न याम । अत्र स्थि त्वा च कि करवाम । यद्वा, यद्यपि पादौ पदमपि ग न्तु न शक्तौ, तथापि तव पादमूलात् कथञ्चिद् व्रजमेव शनैः शनैर्याम । अ यथाऽत्र स्थित्वा किं करवामेत्यर्थः ॥

निवृत्तिपक्षे, ननु सर्वासां श्रुतीनां ब्रह्मपरत्वे कर्मणस्तत्तत्प र्यावेषयत्वात्तदनुष्ठानादेर्वैयर्थ्यं प्राप्तमित्याशङ्क्य, तत्प्रशनात् पूर्वं तद्वैयर्थ्यमाशङ्कते ? तदुत्तर वा ? नाद्यः । यत्र तु द्वैतमिव भवति तदितर इतर पश्यतीत्यादिना संसारदशायां क्रियाकारकादेः स त्त्वावाधानात् तद्वैयर्थ्याऽनवगमात । न द्वितीयः । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येदित्यादिना तदुत्तर तद्वैय

ऽर्यस्येष्टत्वादित्याशयेनाहु' ॥ चित्तमिति ॥ सुखरूपेण भवता चित्त यदाऽपहृत सच्चिदानन्दघने मनसाभिन्ने परमात्मनि चित्त यदा लीन तदा गृहेषु बाह्येष्वभ्य तरेषु च न निर्विशति । अत एव करावपि गृहकृत्ये न निर्विशत । पादौ पदमपि न चलत । तथाच सर्वेन्द्रियव्यापारनिवृत्त्या तत्त्वविद कर्माधिकाराभावात् तदपेक्षया कर्मानुष्ठानादेर्वैयर्थ्यं नास्ति दोष । नैव तस्य कृतेना ऽर्थो नाकृतेनेह कश्चन ॥ नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्र य ॥ इत्यादिशास्त्रादिति भाव । अतस्तव पादमूलाद् वय व्रज कथ याम । कर्मकाण्डश्रुत्यानुगुण्य कथ भजाम । तासामप्यस्म दनुयायित्वात् । गत्वा च किं करवाम । क्रियाकारकादिप्रतिबोध-बोधकानामस्माक तदानुगुण्यासम्भवादिति भाव ॥ ३४ ॥

एव दक्षिणदिग्गता उक्ता प्रार्थयन्ते ॥

सिञ्चाङ्ग ! नस्त्वदधराऽमृतपूरकेण
हासावलोककलगीतजहृच्छयाग्निम् ॥
नो चेद् वय विरहजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयो पदवीं सखे ! ते ॥ ३५ ॥

सिञ्चेति ॥ अङ्ग ! हे भगवन्! अस्मद्हृच्छयाग्नि सिञ्च, न तु निर्वापय त्वद्विषयकामस्य परमसुखरूपत्वात् । यतस्त्वयैवोत्पादित इत्याहु ॥ हासेति ॥ तव योऽय हासपूर्वकोऽवलोक कलगीत च ताभ्या जातो यो हृच्छय काम स एवाग्नि । तत्र हास काम-जनकः, अवलोकः स पुलकणकर्त्ता, गीत वायुरिव । तत्रापि कल-गीत सर्वतो वायुः । सिञ्चन च न वा घृतादिना, स्वर्गस्थाऽमृतेन, चन्द्रस्थसुधया वा सम्भवति । तेषा यथाकथञ्चिदुदरमयत्वा

योग्यानामप्यनभिलषितत्वेन हृदये प्रनेशायोगादि याशयेनाहुः ॥ त्वदधरामृतपूरकेण ॥ अलौकिकेन पूरकेणाऽपि सिञ्चनोक्त्या यथोक्ताग्नेः परममहत्त्व सूचितम् । सिञ्चनमार्थनया भगवद्विषयः काम एवास्मज्जीवन जठराग्निरिदिति भावितम् । अन्यथा स्वस्य यदनुप्रेय, तदावेदयन्ति ॥ नो चेदिति ॥ सिञ्चनेन यदि न जीवयसि तर्हि विरहजाग्निना उपयुक्तदेहा दग्धशरीरास्ते पदयोः पदवीम् । अन्तिक योगित्वद् याम माप्नुयाम । उपयुक्तपदेन, त्वयोपभोग्य-देहाना यथोक्ताग्निनोपयुक्तत्वमयुक्तमिति भावितम् । ननु सिञ्चनेनातिप्रवृद्धःकामाग्निदाहको भविष्यतीत्याशङ्कानिरासाय विरहाऽग्निनेत्युक्तम् । तथाचाऽतिप्रवृद्धोऽपि जाठराग्निर्यथेष्टभोजन लाभे सति न दहति, अनशनादिना तदलाभात्तु दहति । तथा हृच्छयाग्निरपि स्वभोग्यालाभे तदाशानिवृत्त्या विरहाग्निरूपेण परिणतो दहतीति भावः । यद्यपि तव प्राप्तौ नास्त्यस्माक किञ्चिदपि प्रतिबन्धक तथापि भगवदुपभुक्तदेहाना भगवत्प्राप्तिरभिलषिता, तद्विपर्यये महद्दुःखमन, सखिरूपेणावतीर्णस्य तव यथाऽस्म मनोरथपूर्तिर्भवेत तथाऽनुष्ठान योग्यमिति सूचय स सम्बोधयन्ति ॥ हे सखे इति ॥ अथवा यद्यप्यस्मन्मरणे तव नास्ति कासिद्धानिस्तथापि सखित्वात् पश्चात्तापस्तु भविष्यत्येवेति सम्बोधनाऽऽशय ॥ अनभिज्ञापक्षे, अनेन निर्वस्त्राङ्गदर्शनार्थं यथा वस्त्राहरण लीलाऽऽरब्धा, तथा निर्लज्जवचनश्रवणार्थमिय लीला समारब्धेति विज्ञाय विस्पष्ट प्रार्थयन्ते ॥ सिञ्चेति ॥ आदौ क्रियापद प्रयोगेणोत्कण्ठाधिक्य सूचयन्ति ॥

अङ्ग ! हे मिय ! नः कामाऽग्नि सिञ्च । निर्वापय । यतस्तव हासाऽवलोककलगीताभ्या जातश्चादीप्तः । तथाच अस्मद्हृदयशयमेव कामाग्नि हासावलोकाभ्या कलगीतलक्षणेन मन्थानदण्डेन प्रबोध्य

वाच पेशै' प्रदीप्य तत्रास्मान् अस्मत्प्राणान् दग्धुमत्राऽतोऽसि। नदसुचितमतस्तज्जनितपापाद् बिभेषि चेद तर्हि त त्रिताय। यतै चाऽग्नि. प्रदीप्यते तेनैव पश्चात्तापेन झगिति यदि निर्वाप्यते तर्हि तदैव तत्पाप निवर्तते इति भाव. । ननु सम्प्रति ममाग्निं जल पूर्णभाजनाभावात् कथ निर्वापयामि तथा चेद् भवतीनामाग्रहस्तर्हि यमुनासन्निधौ चलनीयमिति सोपहासमाशङ्क्याहु ॥ अमृतेन, त त्राप्यग्ने परममहत्त्वात तत्पूरकेण । स्वार्थे कन । ननु जलमपि यत्र दुर्लभ तत्राऽमृत कुतस्त्य; तदपि इन्दोरपि दुर्लभत्वात् तत्पूर कुत इत्याशङ्क्य कथमस्मज्जीवनमाधन गोपायसि ॥ प्रसक्षोप लभ्यमानस्य गोपनाऽयोगादित्याशयेनाहु' ॥ त्वदधरेति ॥ अधा नाल्पेनाऽमृतसमुद्रेणापि तच्छान्तिरतोऽस्तु तदालेभ्य, येनाऽमृतेन तच्छान्तिस्तन तव सुखचन्द्र एवास्त्यऽतो नास्ति तव कोऽप्ययास इति भाव । अनेन ज्वालनोपशमनयोरुभयोरपि स्वायत्तत्वात्तुभ यविधा क्रीडोचिता, न त्वेकविधा । दुर्लीलाकतृषु राजकुमारेष्वपि तथा दर्शनादिसपि ध्वनितम् । हृच्छयाग्निरित्यनेना तदेऽय दाहा त्मको रोगविशेषस्त्वदधराख्यपात्रविशेष मुखे निधाय पीतेना ऽमृतमेवेहासमर्थेन तत्रस्थाऽमृतपूरकेणौषोपशान्ति गमिष्यति, न तु अन्यै कोटिभिरप्युपायैरिति ध्वनितम् । ननु मम स्वाभाविक दर्शनादिभिर्यदि युवती ज्वलेयुस्तर्हि कुत्र कति वा स्वाधराऽमृत दानेन चिकित्स्या इति चेत् तत्राहु' ॥ नो चेदिति ॥ यदि न सिञ्चसि तर्ह्ययमेकोऽग्निस्तेन शोषितदेहास्तथा विरहजाग्निना दग्ध शरीरास्ते पदयो पदवी साक्षि यमधुनैव ध्यानेन प्राप्नुयाम । अन्ते मति सा गतिरिति न्यायात् प्राणान् विहायाऽपि प्रेष्ठसन्निधान सपादयामिति स्वमाणेभ्योऽपि स्नेहाधिक्य सूचय त्य सखायय न्ति ॥ हे सखे इति ॥ यद्वा, पूर्वज म यऽकृततपस्का वयमतो वि

रहाग्निना प्राणान् जुहुमः । ततस्तत्र पादयो पदवीं मार्गं प्राप्नुया-मस्तद्रूपा भविष्यामः । ततोऽनिच्छतोऽपि तव पादौ अस्मत्स्वेव पतेतां, न तु भूमौ । ततश्च त्वत्पादभारेणैवोपशान्तहृच्छयाग्नयो वयं सिद्धमनोरथा भविष्यामः । त्वं चानिच्छन्नप्यस्मत्कुचस्पर्शं सुखं प्राप्नुवन्नपि स्त्रीवधानुतापमेव भूयात् प्राप्स्यसि । तथाच सखीरस्मांस्त्वमत्र सतापयसि चेत् तर्हि वयम् अपि त्वां सखायमेव कथं नानुतापयामः । परं तु भेमहतऋतदनुतापदुःखमपि कोटिगुणीकृत्य अस्मभ्यमेव दास्यते इति जानीम । किं कुर्मोऽस्माकं दग्धललाटमेवविषमेव विधात्रा सृष्टम् । तस्माद् भो, पारेणामादर्शन कृपासागर स्वानुतापरस्त्वीबीज किमर्थं वपसि, कथं या फलभोगाभागिनीरस्मांश्च करोषि । मुक्ताऽऽसदाग्रहमङ्गीकुरु अस्मानित्याशय । यद्वा, अकृचित्व्यप्रार्थनामाकर्ण्यापि विमुखमालक्ष्याहुः ॥ नो चेद् वयमिति ॥ नर्त्तेतावत्पर्यं त कायाऽग्निना कथं न दग्धा इत्याशङ्क्य तत्सिञ्चनाऽऽशया सञ्जीविता वयमित्यं परं तच्चिन्त्या सोऽग्निर्विरहाजाऽग्निश्चेत्सम्मिद्धयत्तस्य जीवनं दुर्लभमिति भावः । नन्वस्तु, तेन मम का हानिरिति चेत् तत्राहु ॥ यास्येति ॥ तथाच निरवधि दुःखं दातुं प्रवृत्तोऽसि । तादृशं तु सुखं तुभ्यं दातुं नास्माकं सामर्थ्यम् । अस्मद्विरहेण तव दुःखानुदयात् । सयागस्य तादृशदुःखजनकत्वेऽप्यस्मिञ्जन्मनि तस्य दुर्लभत्वादिदं शरीरं दग्ध्वा तव पादयोर्मार्गभावं याम । तेन च सर्वदा स्वसयोगैनैरविरतं तव दुःखं दास्याम इति भावः । तथापि परस्परदुःखप्रदानं न सख्यधर्मं इत्याशयेनाहु ॥ हे सखे इति ॥ यद्वा, नन्विदानीमिदं दुर्घटं जन्मान्तरे स्यादित्याशङ्क्याहुः ॥ नो चेद्, इदं दुर्घटमेति चेत् तर्हि ध्यानेऽपि ते पदयोः सान्निध्यं न याम । यतो विरहजाग्नेरेवोपयुक्ता उचिता, न तु सयोगाऽमृत

योग्या देहा यासां ताः । अधुनेव जन्मान्तरेऽपि विरहस्यैव निश्चयादिति भावः । तस्मात्त्वया सम्पादितं सख्यं दृष्टैव सम्पन्नमिति सम्बोधनाशयः ॥ मानिनीपक्षे, अङ्ग ! हे लम्पट ! नोऽस्माकं सहजेन हासादिना जातो यस्तव कामानलस्तं त्वदधराऽमृतपूरकेणैव सिञ्च । तादृशाभ्युपशामकताहशाऽमृतदानयोग्यायाः कस्याश्चिदस्मास्वभावात् । इष्टे मधुरादिवस्तुनि दुर्मिले दृष्टे सति स्वोष्टपुटी लोके यथा क्लिद्यते तद्वदिति नर्मव्यङ्ग्यम् । यद्वा, नोऽस्मत्तस्त्वऽन्यासामिवाधराऽमृतपूरकेणेत्यर्थः । बलात्कारमाशङ्क्याहुः ॥ नो चेद्, बलादस्मदधराऽमृतपानाय प्रवर्त्स्यसे चेव तर्हि वयं त्वत्पतिविरहजाग्न्युपयुक्तदेहा भवेम, म्रियेमहि । तथापि ध्यानेन चिन्तनेऽपि ते पदयोर्मार्गमपि, न याम = न यास्याम । आलक्ष्मणादऽस्मत्स्वभावं जानासीति सम्बोधनाशयः ॥

निवृत्तिपक्षे, तरति शोकमात्मवित्, ब्रह्मविदाप्नोति परं, नाऽन्यः पन्था विद्यतेऽयनाय इत्यादिश्रुत्या परमपुरुषार्थोऽनन्यसाधनतत्त्वज्ञानस्यास्मन्मवलोकनादिना यथाकथञ्चिदाप जातस्य करुणाऽमृतधारयाभिषिञ्चनेन वर्द्धनमुचितमिति प्रार्थयन्ते ॥ सिञ्चेति ॥ अङ्ग हे परमात्मन् ! नोऽस्माकं श्रुतीनां हासपूर्वकं प्रसन्नतापूर्वकमवलोकनं = श्रवणपूर्वकं मननम् । कलयति सर्वतश्चित्तवृत्तीराकर्षतीति कलं, तच्च तद् गीतं गानं = निदिध्यासनं च, ताभ्यां जातो यो हृच्छयस्य सन्तासकस्य कामादेर्दाहकत्वादग्निस्तं ज्ञानाग्निं त्वं दोष्ठपुटीःस्वनवाङ्मयाऽमृतपूरकेण कृष्णद्वैपायनाद्यात्मना त्वं सिञ्च वर्द्धय । यथा यथोक्ताग्निस्तद्वादिकल्पितकुतर्कजलप्रवाहैर्नोपशाम्येत तथा कुर्वित्यभिप्रायः । कृष्णाद्यात्मनाऽवतीर्णस्य भगवतो वचनाऽमृतत्वमुक्तम् । प्रपन्नपारिजाताय तोत्त्रवेत्रैकपाणये * ज्ञानमुद्राय कृष्णाय गीताऽमृतदुहे नमः * । जयति पराशरसूनुः

सत्यवतीहृदयनन्दनो व्यासः * यस्यास्यकमलगलित वाङ्मय ममृत जगत् पिबतीत्यादिना ज्ञानस्याग्निरूपत्वमुक्त भगवता । यथै धासि समिद्धोऽग्निर्भस्मसात् कुरुते तथा * ज्ञानाग्निः सर्वकर्मा णि भस्मसात् कुरुतेऽर्जुन * यस्य सर्वे समारम्भाः कामसङ्कल्प वर्जिता * ज्ञानाग्निदग्धकर्माण तमाहु पण्डित बुधा * इत्या दिना तत्प्रेचन तेनैव कृतम् । न हि ज्ञानेन सदृश पावनमिह विद्य ते * तेषा ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते * उदारा सर्व एवैते ज्ञानी त्वात्मैव मे मतमित्यादिना । विपक्ष दोषमाहु ॥ ना येद्, न विश्वसि चेत, तर्हि वय, तच्छ्वद्रादिप्रतिपादितेन– श्रुतिषु प्रसरणभिन्नपरमात्मनिरूपण नास्तीत्यादिरूपेण तव स्वरूपलक्षणा ऽग्निनोपयुक्तदेहा भक्षितस्वरूपा नष्टा भवेम । तथापि ते पदयोः पन्दी तत्त्व, ध्यानेन याम = तत्राभिमावयस्रो भविष्याम । वस्तुत ऽ यथाभावस्य वादिसहस्रैरपि कर्तुमशक्यत्वादिति भाव । यस्मा दू नागर्थयो, सख्य वर्ततेऽतस्त्वो कदापि न त्वयुक्तो भवत इति सम्बोधनाशय ॥ ३५ ॥

ननु यद्यपि निःसीमप्रेमवशा भवत्यस्तथापि मर्यादापालनार्थं पत्यादिसन्निधौ स्थित्वैव मदाराधन कर्तव्यमिति चेत् तत्राहु

यर्ह्यम्बुजाक्ष तव पादतल रमाया
दत्तक्षण क्वचिदरण्यजनप्रियस्य ॥
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग ! (१)
स्थातु त्वयाऽभिरमिता बत पारयाम ॥ ३६ ॥

यर्हीति ॥ हे अम्बुजाक्ष ! यर्हि यत्प्रभृति तव पादतल वयम्

---

(१) अञ्ज इति पाठा तरम् ।

अस्माकं स्पृष्टवस्त्रसत्प्रभृति अ यस्य समक्षे स्थातुमपि न पार याम शक्नुम. । इत' परं तत्समक्षे स्थिति कोऽपि नरकखेदाद्प्य ऽधिकखेदं करोतीति सूचनाय श्रतेत्युक्तम् । किञ्च, नैतावन्मात्रम्, अपि तु त्वयाभिरमिता बालभावमारभ्य त्वया सार्द्धं त्वत्प्रसादात् क्रीडामपि लब्धवत्य । अम्बुजाक्ष त्वच्चरणकमलयुक्तं ध्याप्रीतीक्ष म्बुजाक्षः । तथाचा त्वच्चरणद्वाचिह्नस्त्वं सर्व जानन्नपि किमेवमा ग्रह करोषीति सम्बोधनाशय' । स्वस्य भगवत्पादतलस्पर्शयोग्य तामपि सूचयति ॥ क्वचिदरण्यजना प्रिया यस्य । तथाच वय मध्यरण्यजनत्वात् क्वचिदस्माकमेति भाव. । इत' परम यत्र क्वा पि स्थातुमशक्ता इत्यत्र हेतुमाहु ॥ रमाया लक्ष्म्या दृष्टोऽसत्त्व द त्तावसर वा । तदपि क्वचिदेव, न सर्वदा । तथाच रमाया अपि यत् प्राप्तुं दुर्लभं चेद पादतलं स्पृष्ट्वाऽ यस्मत्पक्षे स्थातुमस्माक का शक्तिरिति भावः । यद्वा, हे अम्बुजाक्ष दृष्ट्यैव तापनिवारक, यथा लक्ष्म्या च.ञ्चलस्य निवारणेनत्वाह्य तथाऽस्माभिरपि सर्वतआश्चल्य परित्यज्य तत्माक्षये तदेकनिष्ठतैव सपादनीयेत्याशयेनाहुः ॥ रमाया इति ॥ किञ्च, अरण्यजनमित्याय सर्वसङ्गविनिर्मुक्तेषु वने विहत्य तवाराधनपरेष्वेव तव प्रीतिदर्शनात् तत्प्रीत्यर्थं तत्साम्य मेवास्माकमपि सपादनीयमित्याशय । किञ्च, त्वा ये सर्वदा त्वयाऽभिरमिता अपि जाता. । अ यथा जीवनस्यैव दुर्लभत्वात् । तस्माद्वयम यत्र न तु प्रेषयितु च न समुचिता इति भाव. ॥ क्वचि दक्ष इति पाठस्तत्राऽत्र सर्वभावेन स्थातुमित्यर्थ । अन्यभिज्ञापक्षे, ननु कामाग्नितप्ताना यदि गृहकृत्येषु नास्ति शक्तिस्तथापि कुलाङ्गना ना युष्माकं पतिसन्निधावेव स्थातुमुचितमत. स्वपतीनेवोपगच्छत, त एव कामाग्निमपि निर्वापयिष्यन्तीति चेत्तत्राहु.॥ यर्हीति॥ हे अम्बु जाक्ष ? तव नेत्रकमलदर्शनक्षणमारभ्यैव वयं भ्रमरीभूय स्थिता'

स्येत्युत्पन्नचक्षूरागेण लब्धचित्तासङ्गादिकाः किमेत्र अपीपि। चक्षूराग, प्रथम चित्तासङ्गस्ततोऽथ सकल्प * इति रसशास्त्र किं न जानामीति भाव' ।तत्राऽपि यहि अस्मद्भाग्योदयक्षणे कदाचिदेव क्वचिदपि कुञ्जे गोवर्द्धनादिकुञ्जमदेशे त्वया अभिरमिता निज भावव्यञ्जनयाभिर्न्नि दतवत्यस्तत्र पादमूलमस्माकम करेण सवाहना ऽऽर्थं कुचाभ्या वा स्पृष्टवत्यो, यतो रमाया , जातावेकवचन, रमणीना दत्तोत्सवम्। यद्वा, यद्वाऽञ्छया श्रीर्ललनाऽऽचरत्तप * इति नागपत्नीना मुखाच्छ्रुतत्वाद् रमाया वैकुण्ठवासि या लक्ष्म्या नारायणप्रियाया अपि रमणाभिकाङ्क्षिण्या उत्सवदायकम् । तथास्माक तदभिलाषे, किं चित्रमिति भावः। स्वस्य याग्यत्वेन दुर्लभत्वमाह्याह ॥ अरण्यजना गोपादय एव प्रिया यस्य । यद्वा, रमणीना मुत्सवजनकस्य कादाचित्कत्ववर्णनमसङ्गतमिसाशङ्क्याह ॥ अरण्यजना पुलिन्द्य प्रिया यस्य । तथाच पुलिन्द्यादिषु दर्शनादिना प्रीतिजनकस्य पादतलस्पर्शोऽस्माक दुर्लभ इति भाव ।अहो रमण अस्मान् विहाय ताद्दशाना प्रीति मयच्छतीत्युपालम्भोऽपि व्यज्यते। तत्प्रभृति अन्यदर्शनमपि न रोचते । तथाच कोऽप्युच्चाटनम त्रकप्र स्तत्र पादतलमात्रस्पर्श एवेति भाव. । अञ्ज इति पाठे, ननु भो मिथ्यावादि यो व्रज रसथेति चेत् तत्राह ॥ अञ्ज• = अनायासेन, तथाच तत्र बलाद् वसामो, न तु प्रीत्येति भावः ॥ मानिनीपक्षे, न वक्षस्पर्शादिना कामाग्निमुद्दीपयित्वा सम्प्रत्येव वक्तु प्रवृत्ता इत्याशङ्क्याह, ॥ यर्हीति ॥ बाल्ये त्वदङ्गस्पर्शे कदाचित् कृतः स्यात्, पर तु यत्प्रभृति तव पादतल रमणीना दत्तक्षण जात तत्प्रभृति कथञ्चिदपि कदाचिदपि नाऽस्माकम्। यतो वाऽरण्यजन प्रियस्य वानरादिप्रियस्य सत., त्वया कथादिना अभिरमिता अपि। अत एवान्यथा श्वश्रूप्रमुखाना समक्ष स्यात् पारयाम । अ यथा

तैर्द्विष्येमहीति भाव । अम्बुजवद्विशालनेत्रस्यास्य तस्माव पश्यतो नैव प्रार्थनमुचितमिति सम्बोधनाशयः । यद्वा, यदि तव पादतल वय- मस्पाक्ष्म तर्हि तत्प्रभृति अ यसमक्ष स्थातुमपि न पारयाम ॥ बतोति खेद । तथा सति महान् खेद स्यादिति भाव । न तु तथा जातमतो महत् कुशलमित्यर्थः । पादतलस्पर्शमात्रस्य यदा इय कथा तदा त्वयाऽभिरमिताना जायमानस्तु खेदो वाचामप्यगोचर इत्य- भिप्रायेण त्वयाभिरमिता इत्युक्तम् । ननु मदङ्गस्पर्शवतीना मया- भिरमिताना प्रतिदिनमानन्दास्वादनपराणा तत्समक्षावस्थाने कि प्रयोजनमित्याशङ्कानिवृत्त्यर्थमुक्त, रमायादर्शनम् । तथाचैवविध- पादस्य तवाङ्गसर्वस्वसम्भावाद् नवर्णवतीमिरस्माभि सङ्गत स्थ- पितासम्भवात तादृशस्य सुखस्य तथाविधदु खकारणत्वसम्भ- वा मेवमिति भाव । तत्राप्यरण्यजनप्रियस्य रमणविरोधिभावत- स्त्वाचोभयभ्रष्टत्वसम्पादक तव पादतलस्पर्शादिकमिति भाव ॥

निवृत्तिपक्षे, ननु मया सिक्तोऽपि यथोक्तवादिकस्त्वदुक्त कैर्निर्वापण यास्यतीति चेत तत्राहु ॥ यर्हीति ॥ हे अम्बुजाक्ष सर्वहृत्कमलव्याप्त । यदा तव प्रसादोदयकाले मोक्षसाधनसम्पदा- धिकारिणा विचारिता वय तव पादतलमस्पाक्ष्म तत्प्रभृति ना य समक्ष स्थातुमपि पारयाम । ब्रह्मातिरिक्त किमपि पारमार्थिक न प्रतिपादयामः । आपाततोऽर्थान्तरप्रतीतावपि अन्तस्तात्पर्येणा- न्यपरत्व नास्तीत्यर्थ । तत्रापि त्वया परमात्मना अभिरमिता त्व- य्येव सम वय प्राप्ताः । ननु तथापि, यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतीना सविशेषपरत्वमेवावसीयते । निर्विशेषस्य निर्व्यापारस्य जगत्कर्तृत्वाद्यसम्भवादित्याशङ्कानिरासायोक्त–त्व- चिद्रमाया आपातरम्याया महामायाया दर्शन, न तु सर्वत्र सर्वदा च । तथा शाखाग्र यायेन तासा सविशेषे ना, निर्विशेष एव

तात्पर्यम । यथोर. स स्थाणुरितिवद् यो जगत्कर्तृत्वादिविशिष्ट' स निर्विशेष. परमात्मेति जगत्कर्तृत्वादेनिर्विशेषत्रह्मलक्षणकत्वे नाऽस्ति कश्चिद्विरोधः। इत्थंश्चसम्ब धानिरूपणा मायासम्ब धो ब्रह्मणि न वास्तव इति भाव. । ननु श्रुतवेदा तानामपि यथापूर्व ससारानुवृत्तिदर्शनात् कथमुच्यते पुनर पयरत्नमस्मार्क नास्तीत्याशङ्कानिरस्त्यर्थमुक्तम्—अरण्यजनप्रियस्य ॥ तथाच विवेकवैराग्यादिसाधनविधुरत्वचरणारवि दानाभिमुखस्यैव कथा, न तु सर्वसाधनसपदलकृतस्येति भाव. ॥ ३६ ॥

ननु रमाया इत्तक्षणमित्युक्त्या, तद्वद् अस्मानप्यङ्गीकुर्विति भवतीभि सूचितम् । पर तु लक्ष्म्या देवगत्वा जातो य. सम्ब ध. म तु माधमिको, भवतीना तु न तथेयत. किं करोमीतिचेत् तत्राहु. ॥

श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या
लब्ध्वापि वक्षसि पद किलभृत्यजुष्टम् ॥
यस्या स्ववीक्षणकृतेऽन्यसुरप्रयास-
स्तद्वद्वय च तवपादरज प्रपन्ना ॥ ३७ ॥

श्रीरिति ॥ श्रीर्यथा यत्पादाम्बुजरजश्चकमे कामयते स्म, तद्वद्वयमपि तव पादरज. प्रप ना । तथाच श्रीरपि न दैवगत्वा भव त प्राप्तवती, किं तु महता तपसेति भाव । तत्रापि तुलस्या सप. या सह । न चाङ्गसङ्गालाभात सापत्न्यमप्यङ्गीचकार, अपि तु भक्त्यतिशयादेवेत्राशयेनाहु ॥ वक्षसि पद लब्ध्वाऽपि तुलस्या एवासाधारणमिति वा । तथाच परमोत्कृष्टस्थल प्राप्यापि तादृशं रजो यच्चकमे तद्भक्त्यतिरेकविजृम्भितमिति भाव. । ननु

कुत एवमित्याशङ्क्य रजसो माहात्म्यमाहुः ॥ सूरिभिर्नारदादिभिः सर्वैरपि तदेवानन्यतया सेवितम् ॥ किञ्चेति प्रसिद्धम् । नाऽत्र किञ्चिद्वक्तव्यम् । रज एवैतादृशसामर्थ्यं, यत् तत्र सलग्नचेतसः पुनरन्यत्र गमनासम्भवसम्पादनं, ना यस्यातो लक्ष्मीरपि पदं लब्ध्वापि कदापि चेतसोऽयत्र मनस्तिनं यदेव प्राप्य यस्य कस्यापि स्पर्शो इति मनासे निजाय यद्रजश्चक्रम इति भाव । ननु लक्ष्म्याः कुत एतावद्दूषमित्यत आहुः ॥ यस्या लक्ष्म्याः स्वस्य वीक्षणकृते श्रीरस्मात् करुणया पश्यत्वित्येतदर्थं येषां सुराणां ब्रह्मादीनां प्रयासः । सर्वपुरुषार्थानां तदधीनत्वात् । तथाच यद्दशी मा मार्यते । काश्चित् कदाचिदप्य तं यदि तव कुर्यात् तर्हि स को भवेत् किं कुर्यादिति विचारस्त्वास्त्यास्तावत् भयमिति भाव । तद्दृशमपि प्रार्थनावता वहुत्वम्, लोकय तव्रयात् प्रथममेव तव पादरजः प्रपन्ना । तस्मादस्मदर्थमेवावतीर्णो भगवानात्मानं न गोपय गोपनाऽसम्भवतो माऽस्त्वाग्रह इति भाव. । यद्वा, तव पादस्पर्शस्य को वा तादृशो महिमेति चेत्तत्राहुः ॥ श्रीरिति ॥ यद्वा, ननु चरणस्पर्शादेव भवत्यः कृतार्थाः किमर्थमङ्गसङ्गार्थं विकलचित्ता । किञ्चाङ्गसङ्गमवाप्य पुनश्चरणस्पर्शो भक्तिर्न भविष्यति । नचवका हानिरिति क्षमितव्यम् । तस्या एव परमपुरुषार्थत्वादित्याशङ्क्याहुः ॥ श्रीरिति ॥ तथाच भगवत्पादरज एव तथाविध यथा वक्षःस्थलनिवासिनी श्रीः रपि ..ेव चक्रमे। परमभक्ताः तुलस्याश्च तदेवाऽसाधारणं स्वाश्रयत्वं सर्वभृत्यैस्तदेव जुष्टम् । तस्मात् तत्प्रतिव घऋमङ्गसङ्गाभिलाष निवर्त्य तदेकशरणत्वमेवाश्रयिष्याम इति भावः ॥ अनभिज्ञापत्ते, ननु सौ दर्याद्गुणसम्पन्ना शोभनकुलोत्पन्ना महिषीपरयोग्याः किमेतत्रयेत्याशङ्क्य महिषीपदापेक्ष येदमुत्कृष्टमिति लक्ष्मीदृष्टा तेन समाधानमाहुः ॥ श्रीरिति ॥ यद्

यस्माल्लक्ष्मीर्नारायणस्य पदाम्बुजरजो यथा चक्रमे तद्वद्वय नारायणसदृशस्य तव पादरज प्रपन्ना. । यद्वा यस्य नारायणस्य तद्वत् तत्तुल्यस्य तवेति वा । नारायणसमो गुणैरिति * गर्गोक्त्या तव नारायणसमत्वेऽस्माकं लक्ष्मीसमत्वमर्थादागतमिति भाव. । तत्रापि वक्षसि परमोत्कृष्टस्थले पद रमणीयाय लब्ध्वाऽपि तुल स्याः सपत्न्या पदमपि भृत्यैर्जुष्ट पुरुषजनसमुदाययुक्तमपि । त थाच तस्या यथा प्रेयसीभावसमुचिता लज्जा स्त्र यूनता चानिगण य्य दासीभावोऽभिलषितस्तथैवास्माकमपि । यद्यप्येव न,तथापि त्व नारायणवन्नाचरसि, वक्ष स्थलोद्वहनयोग्या अस्मान् स्वपाद-तलसन्निधौ स्थातुमपि न ददास्यतो दग्धललाटा वय कि कुर्म इति भाव.।ननु लक्ष्मीवत्त्वमपि युष्मासु मास्तिमित्याशङ्क्याह ॥ य स्या इति ॥ तथाच या पुनतुल्यान् सुरादीनपि यया कयाचिच्छ-क्त्याऽनुगृह्णाति सा चञ्चलेति मूर्खप्रवाद इति भाव । श्री पदा-ऽम्बुजरजश्चकमे, वय तु पादरज इत्युक्त्या श्रिय' स्ववासस्थानो-पमसाहचर्योपाधिकसेवनमस्माक तु निरुपाधिकमिति व्यज्यते । यद्वा, ननु स्वस्वपतिवक्षःस्थलरमणयोग्या कथ दासीभाव प्रार्थ-यन्ते ? इत्याशङ्क्य, यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन * इति न्यायमवलम्ब्य समाधानमाहु' ॥ श्रीरिति ॥ स्वभर्तुर्नारायणस्य वक्षसि पद लब्ध्वापि लब्धनारायणपादसम्बन्धया तुलस्या सह, यस्य तच्च*ट दावनसम्बन्धि पदाम्बुजरजश्चकमे । तत्सवनाऽर्थ वृ दावनशोभारूपेण प्रेयोवक्षसि रेखारूपेण श्रीरत्रास्ते । तुलस्यपि वृ दारण्यदर्शीरूपेण वृ दारूपेण चाऽऽस्ते इति भावः।तस्मात् परम पतिव्रताया लक्ष्म्या यदेव दशा तदानी वय कथ, भर्तु शुश्रूषण-मित्याद्युपदेशार्हा इत्यपि रतिाम ॥ मानि ीपक्षे, ननु श्रीवृ दे अपि स्वपति सत्त्वाऽत्र वने मम सन्निधौ तिष्ठत., यूय किमित्येवविध

मान कर्तुं प्रवृत्ता इति चेत् तत्राहु ॥ यद्यपि श्रीर्हि दया सहा-ऽत्र स्थित ते पादरजश्चकम तद्वद्वय कि पादरज, मपन्ना, ॥ अपि तु नेति काक्वा योज्यम् । तयोरेव तत्तुक्त नास्माकमिति भाव । यद्वा, यस्य नारायणस्य पदाम्बुजरज श्रीश्चकम, तद्वद्वय = तेन नारायणेन तुल्या वयम् अत एव ताहशलक्ष्म्यादिप्रार्थनीय पाद-रज मम्पन्नास्तत्र लक्ष्म्यादिसहशास्य तुल्या आराधनीया इति भाव ॥

निवृत्तिपक्षे लक्ष्म्यादिवत् स्वस्य भगवत्परायणत्वमाहु' ॥ श्रीरिति ॥ तथाच श्र्यादिसमस्तारा यपादपद्मे समस्तश्रुतितात्पर्य-विषय परमात्मनि सर्वभावेन रति सम्पाद्येति भाव ॥ ३७ ॥

तथाच भगवदेकभोग्यशरीराणामस्माक मनोरथ पूरयेति प-श्चिमदिग्गता प्रार्थय ते ॥

तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतीस्त्वदुपासनाऽऽशा ॥
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम
तप्तात्मना पुरुषभूषण ! देहि दास्यम् ॥ ३८ ॥

तन्न इति ॥ यस्माद्वय भवत्पादरज एव मपन्नाः । मपत्तिश्च भवत्प्रसाद विना दुर्लभा । तस्मात् प्रसीद प्रसन्नो भव । त्वयि प्रसन्ने किमपि नावशिष्यत इति भावः । ननु दु'खमद मत्सङ्गम प्रतिबन्धक दुरदृष्ट भवतीना वर्तते। तत्र मया कि कर्तव्यमिति चेत् तत्राहुः ॥ हे वृजिनार्दन ॥ सकृदुच्चरितनामभूतदुरितविनाशन स्मरणादिनापि समस्तपापतृणदावानलस्य तवाभिमुख्य प्राप्ताना-मस्माक पापनिवारणे को भार इति भाव'।एतेन स्वपत्यादित्याग

कृतमपि पापं नाशयेति सूचितम् । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज * अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः * तानहमद्विषतः क्रूरान् संसारेषु नराधमान् * क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु * इत्यादिशास्त्रात् । अथ स्वस्य प्रसादादियोग्यतामाहुः ॥ तेऽङ्घ्रिमूले प्राप्ता इति ॥ ननु स्त्रीणां स्वभाव —ईश्वरादपि प्रसादात् गृहस्थाश्रमसुखमेव प्रार्थयन्ति । तत्कदनुकूलं किं प्रसादेऽपेक्षितं इति चेत् तत्राहुः ॥ वसतीर्विसृज्येति ॥ गृहस्थाश्रमं एवास्माभिस्त्यक्तो, न तु गृहमात्रमिति सूचनाय वसतीरिति बहुवचनम् । यतो वयं, त्वदुपासनाऽऽशा भगवद्दृशामना करिष्याम इत्येवंविधा आशा यासां ताः । न तु तज्जन्यं सुखमस्माकमपेक्षितम् । तथाच न धर्मप्राप्त्युपासनपराणामत्र यभक्तानामिवावर्जनीयतया प्राप्ते सुखोपभोगे न कश्चिद्दोष इति भावः । यद्वा, तवोपासस्योपासनस्य न नो यासु ता वसतीः । तथाचाभीप्सितानुकूलं यत्र प्रसादो युक्तो न तु तत्प्रतिकूला । तस्मादितः परं गृहसम्बन्धिवार्ताऽपि न विधेया । तत्र मेषणं तु दूरनिरस्तमिति भावः । एवं भगवत्तमभिमुखीकृत्य प्रार्थ्यमावेदयन्ति ॥ त्वदिति ॥ हे पुरुषभूषण दास्यं देहि । अधिकारिभेदेन दास्यस्यानेकविधत्वात् तत्रेप्सितं स्वाभिप्रायाभिव्यञ्जयन्ति— तत्र [illegible] दर परमानन्दजनक यत् स्मितपूर्वकं निरीक्षणं तेन तीव्रो यः कामस्तेन तप्ता न करणानामस्माकम् । तथाचैतत्तापनिवर्तकदास्यं देहीति भावः । दास्यस्य स्वव्यापारता यस्य, देहीति प्रार्थनया यथोक्ततापनिवृत्तस्तद्द्वारत्वात् तस्याश्च त्वदधीनत्वाद् यथाऽस्माकं तन्निवृत्त्यर्थं त्वदपेक्षा तथा तवास्मदपेक्षायां स्वयमुपभोग्यास्मदुपभोगः कार्यः । प्रभुणा ह्यपेक्षितवस्तुनि दत्ते दास्यं भवतीति भावः । ननु किमिदं कामोपाधिकं दास्यं प्रार्थ्यते, शुद्धमेव तत् प्रार्थ्यतामिति

चेत् तत्राहुः ॥ पुरुषभूषणेति ॥ पुरुषो भूत्वा भूषणरूप ! तथाच भूषणं यथा कण्ठादौ धार्यते तथा पुरुषाकारभूषणरूपस्त्वमपि धारणयोग्यस्तस्मान्मणिखचितभूषणधारणे लाक्षाधारणम् मध्ये का-मोपभोगो, न तु तदुपाधिकृतं दास्यमिति भावः । यद्वा, तत् त-स्मात्, प्रसीद । हे वृजिनार्दन ! खमात्मप्रतिबन्धक पापं नाशय । यतः ॥ प्राप्ता विसृज्य वसतीरिति ॥ तस्मात् तव तु दरस्मितस्य नितरामीक्षणेन चिन्तनेन तीव्रो भजनाभिलाषस्तेन तप्तात्मना तप - सपत्नचित्तानां दास्ये लब्धाधिकाराणामस्माकं लक्ष्म्या इवाऽस्मद्-योग्यं दास्यं देहि । यतो हे पुरुषेषु भूषण! तवापीदमेव योग्य-म् । अस्माकं च कामोपाधिकृतोऽपि तव सम्बन्धोऽलङ्कारायैवेति भावः । अनभिज्ञापक्षे, नारायणसमो गुणैरित्युक्तत्वात् त्वं नारा-यणगुणधारणे योग्यो, वयं च तद्भक्तगुणधारणं इत्याशयेनाहुः ॥ तन्निति ॥ यस्मात् त्वं नारायणसमस्तस्मात्तद्भक्ततुल्या अस्मान् प्रसीद । ननु प्रसन्न एवाहमस्मि, स्वस्मिन् मम कोपो भवतीभिः कदा दृष्ट इति चेत्, तत्राहुः ॥ हे वृजिनार्दन, दुःखविवसकर । ननु नास्ति भवतीनां किमपि दुःखम् । गृहाद्युपद्रवजनितदुःख-हेतवऽसुरादिविनाशाय ममोद्युक्तत्वात् । तस्मात् किमिखेव दै यमा-विष्कुरुतेति चेत्तत्राहुः ॥ त इति ॥ तथाच गृहादिकं महाग्निज्वालया प्रज्वलतु, तिष्ठतु वा । नास्ति अस्माकं तत्प्रयुक्तं किमपि दुःखं, सुखं वेति भावः । ननु भवत्वेवं, यद्यथ वसतीर्विसृज्य मदङ्घ्रिमूलं प्राप्तास्तादेव याच्यतामिति चेत् तत्राहुः ॥ त्वदुपासनाऽऽशाः ॥ तवो-पासनायाः सेवाया श्रेणेण, उप आसङ्गेन स्थितरूपा आशा यासां, नतूपासनया दास्यमाने कस्मिंश्चित्सुखे ताः । त्वत्सुखार्थमङ्गसङ्ग-दानादिरूपोपासनापराणामस्माकमप्यवर्जनीयतया प्राप्तेन सुखोप-भोगेन, को दोषः इति भावः । ननु तादृशमुपासनं तु स्वपतेरेव

सम्भवति । न चाऽहमस्माकं पति ।नन्वस्तु सम्प्रति विवाह इति चेन्न । उपनयनरहितस्य मम सम्प्रति विवाहानधिकाराद् । विवाहिताना भर्तॄनामपि तद्योगाच्चसाधाकाङ्क्षाहुः ॥ त्वदिति ॥ तादृशाकामतप्तात्मनामप्यस्माकं दास्यं दासीभावमेव देहि। तथा च वयं विवाहार्थिन्यः, किन्तु दास्यार्थिन्य एवाऽतस्तवोपनयनादिरहितत्वेऽस्माकं च कन्यात्वे परोढत्वे वा न काऽपि हानिः । सर्वथाऽपि दास्यसम्भवादिति भावः ।यद्वा, हे वृजिनार्दन! अस्माकं विरहदुःखदानमनुचितमिति भाव । न चाऽस्मत्सुदुःखनाशो कश्चन तव प्रयास इत्याशयेन सम्बोधयन्ति ॥ हे सु दररसितनिरीक्षण ॥ एतावतैवास्मद्दुःखनिवृत्तिरिति भावः । यतस्त्वत् त्वत्त एव यस्तोत्र कामस्तेन तप्तात्मनाम् । अतस्तत्तापनिवृत्त्यर्थं विकसितमुख पङ्कजो भूत्वा दास्यमात्रं देहि, न तु बहु प्रार्थयाम, यन्नयादेव स्वरूपमात्मानं कृतवाननीति भाव । किञ्च कामसन्दोहधिभूतत्वादेव श्रीलम्पटस्य तवास्माभिर्युवतिभिः स्वाङ्कदासन सुखजनकमतस्तेनैव नः प्रार्थनाऽपि त्वदर्थमेवेत्याशयेन सम्बोधयन्ति ॥ हे पुरुषभूषण ॥ यद्वा गौराङ्गीनामस्माकमलङ्कारार्थं पुरुषाकारमिन्द्रनीलमणिमय भूषणं विधात्रा रचितम् । तस्मात् स्वोत्पत्तिसार्थक्यायाऽस्मत्कण्ठसलग्नता त्वयाऽवश्यं सम्पाद्येति नर्म व्यञ्जयन्ति ॥ हे पुरुषभूषणेति ॥ मानिनीपक्षे, ननु लोकोत्तरपरमसौन्दर्यीकृष्टचेतसः स्त्रियो महान्तं प्रार्थयन्ति । भवत्यस्तु स्वाधीनमपि मत्प्रार्थनयापि नैवाङ्गीकुरुथेति महान् खेद इत्याशङ्क्याहुः ॥ तदिति ॥ तत् तस्मान्नः प्रसीद । अङ्ग्रहमनुमर्य च त्यज । हे वृजिनार्दन । सर्वदुःखच्छेदकस्यापि दुःखानुत्पादनमनुचितमिति भावः । यद्वा, वृजिनार्दनस्य तव त्वद्दुःखानिवारणमनुचितमिति भावः । यद्वा वृजिन दुःखमदयति प्रार्थयतीति । तथा च दुःखोदकं वस्त न प्रा

ऽर्थनीयमिति भाव.। यतो निरपेक्षाऽपेक्षा केवलं दुःखायैव भवतीत्याशयेनाहुः॥ नेति॥वसतीर्विसृज्य त्वदुपासनाऽऽशा वयं तवाङ्घ्रिमूलं न प्राप्ताः। तस्मात्त्वत्सुन्दरस्मितनिरीक्षणतप्तात्मनामेव दास्यं देहि, न त्वस्माकं स्वामिनीभावमप्रार्थितत्वात्। न ह्यप्रार्थितमनुत्तममपि वस्तु कस्यचिदुपादेयं भवतीति भाव.। पुरुषानेव भूषयति। तथाच सक्तकामस्तन्नचित्तो यदि जातोऽसि तर्हि गोपवधूरूपेण गोपान् भूषयेति भावः। यद्वा, शरीरमात्रमस्माकं तव सविधे वर्तते, मनस्तु स्वस्वगृहमेव प्रविष्टम्। अत एवाग्रहेणात्रावस्थाने कृतेऽपि नास्ति किञ्चित्फलमित्याहुः॥ तदिति॥ तत् तस्मादित परमम्प्राप्य प्रसादं एव विधेयो, न तु ह्यग्रहः। न चेत्र तदोचित, स्वपरदुःखजनकत्वादस्य कर्मण इत्याशयेन सम्बोधयन्ति॥ हे वृजिनार्दनेति॥ मत्सन्निधानेना स्थिता इति न भ्रमितव्यम्। वयं तु तेऽङ्घ्रिमूलं विसृज्य, वसतीः प्राप्ता। नन्वतन्विचत्तया त्वदुपासनं सम्भवति। यतस्त्वदुपासस्य समीपावस्थाना दिरूपोपासनस्य नाशो यातु। अत' स्वाभाविकास्मत्सुन्दरस्मितादिना तीव्रकामाक्रान्तता तव नोचितेति सूचय स सम्बोधयन्ति॥ हे सुन्दरस्मितनिरीक्षणतीव्रकाम॥ नेदं पुरुषरत्नाना लक्षणमपि तु पुरुषापसदानामत पुरुषभूषणस्य तव नेदमुचितमिति भावेन सम्बोधयन्ति॥हे पुरुषभूषणेति॥ तस्मात् पुरुषभूषणस्य तव त्वदर्थं तप्तात्मनामपि स्त्रीणा स्त्रीभावदानमयोग्यम्। किञ्चिदावश्यकत्वे दास्यमात्र दातुमुचितमित्याशयेनाहुः॥ तत् त्वद्वियोगात् तप्तात्मनामपि दास्यमात्र देहि। सर्वथा विमुखाभिस्तु भाषणमपि तव नोचितमित्यर्थ.॥

निदर्शपक्षे, अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य

यथा कप्यास पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदित, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एव वेदे साधा। श्रुतय. परमात्मानमेवोपास्यमावेदयन्ति ॥

तदिति ॥ यस्मात् सर्वश्रुतितात्पर्य्यविषयो भवानेव तस्माद् उपासनापरा अस्मानपि प्रसीद । अस्मत्तात्पर्य्यविषयत्वमात्मनः स्वीकुरु। यतो हे वृजिनार्दन ! सर्वपापासस्पर्श ! निर्विदोष त्वात् तथात्वेनोपासितस्त्वमुपासकस्य दु:खमात्रबीजभूत पापमाश नाशयसि। स एष सर्वेभ्यः पाप्मभ्य उदित इति सर्वपाप्मापगम उक्तः। स च परमात्मन एव सम्भवति। आत्माऽपहतपाप्मेत्यादि श्रुत्यन्तरात्। उदेति ह वै सर्वेभ्य' पाप्मभ्यो य एव वेदेति तदु पासनात् सर्वपापनिवृत्ति' कथितेति भावः। ननु हिरण्यश्मश्रुरि त्यादिरूपश्रवणाद्, य एषोऽन्तरादित्ये पुरुष इत्याधारश्रवणाच्च कथ रूपादिमतिपादनपराणा श्रुतीना परमात्मपरत्वमऽशब्दमस्प र्शमरूपमव्ययम्, स भगव कस्मिन् प्रतिष्ठित स्वे महिम्नि, आकाश वत् सर्वगतश्च नित्य इत्यादिश्रुत्या रूपादिराहितब्रह्मस्वरूपावगमा दित्याशङ्क्याहुः ॥ त इति ॥ वसतीरापातत. प्रतीयमानपरमेश्वरा तिरिक्तमतिपाद्यरूपा विसृज्य तेऽङ्घ्रिमूल श्रान्ता, यतस्त्वदुपासना यात्र आशा आशयो यासा ता वयम्। तथाच परमेश्वरस्यापीच्छा वशात् साधकानुग्रहार्थं मायामयरूपादिस्वीकारो न विरुद्ध्यते। प्रकृति स्वामधिष्ठाय सम्भवाम्यात्ममायया * माया ह्येषा मया सृष्टा य मा पश्यति नारद * सर्वभूतगुणैर्युक्त न मा पश्यन्ति सूरय इत्यादिस्मृतेः। अशब्दमित्यादिशास्त्र निरस्तसर्वविशेषश्चेच 'ब्रह्मपरम्। सर्वकर्मा सर्वकामः सर्वग ध' सर्वरसः हिरण्यश्मश्रुरि त्यादिशास्त्रमुपास्यब्रह्मपरम्। तथा स्वमहिमप्रतिष्ठस्याधारविशेषोप देशोऽप्युपासनार्थो न विरुद्ध्यत इति भाव. । तस्मादनुग्रहाऽर्थे

प्रकटितलावण्यसागरविग्रहस्य तव सु दरस्मितस्य निरीक्षणे यो तीव्रकामोऽभिलाषस्तेन तप्तात्मना जीवाना, हे पुरुषोत्तम दास्य देहि । त्वदनुग्रह विना तव दास्यस्य दुर्लभत्वात् । तेन विनोद्धाराऽसम्भवात् । तत्प्रदानेन जीवानुद्धरेति भाव । यद्वा, तव सु दर यत् स्मित चराचरात्मक निरीक्षण भूतात्मक च जगत् तत्र तीव्रो य कामस्तेन तप्तात्मनाम् । तथाच तादृशतापनिवृत्त्यर्थ स्वदास्य देहीत्यर्थः । निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि * स्मितमेतस्य चराचरमस्य च सुप्त महाप्रलय इत्यभियुक्त वाक्ये चराचरादेर्भगवत्स्मितादिरूपेण निरूपण द्रष्टव्यम् ॥ ३८ ॥

ननु यदि निरुपाधिकप्रेमवन्तो भवन्तस्तर्हि सालोक्यादिफल प्रार्थ्यताः, किमर्थ दास्य प्रार्थ्यत इत्याशङ्क्याहु' ॥

वीक्ष्यालकावृतमुख तव कुण्डलश्रि
गण्डस्थलाधरसुध हसितावलोकम् ॥
दत्ताऽभय च भुजदण्डयुग विलोक्य
वक्ष श्रियैकरमण च भवाम दास्य ॥ ३९ ॥

वीक्ष्येति ॥ इद सर्व वीक्ष्य दास्य एव भवाम । तत्र सारूप्य नास्माकमपेक्षितम्। यतोऽलकै' समानरूपैस्तदुपलक्षितैः । स मानरूपैर्भ्रमरैश्चावृत मुखम्।तथाच सारूप्य गतानामपि या भक्ति रवशिष्यते तदर्थिन्यो वयमिति भावः । तथा सामीप्यापेक्षामपि वारयति ॥ कुण्डलाभ्या श्रीः शोभा यस्य, तयो श्रीर्यस्मादिति वा । तथाचाऽस तत्समीपयोस्तत्र प्रमाणभूतसाख्ययोगरूपयो कुण्डलयोरपि यदा मुखावलोकनपरत्व तदा यस्य का कथेति भावः । गण्डौ विशालौ सुधापानार्थ स्थले यस्मिन्, तथा अधरे

सुधा यस्मिन्, गण्डस्थलं च तदधरसुधं च । कुण्डलयोः श्रीर्ययोस्ते गण्डस्थले यस्मिन्निति वा । एतेन सालोक्यापेक्षा निवारिता । सालोक्य प्राप्तयोरपि कुण्डलयोर्मुखनिष्ठाधरामृतपानाभिलाषेण लोलत्वदर्शनात् । किञ्च, हसितपूर्वकमवलोको ऽवलोकनं यस्मिंस्तद्धसितावलोकम् । अनेन सायुज्यापेक्षाऽप्यस्माकं नास्तीत्युक्तम् । यथोक्तमुखावलोकनजं यान दस्य पृथक्स्थितिं विनाऽनुभवासम्भवात् । किञ्च द्रादिपदमप्यस्माकं नापेक्षितमित्याशयेनाह ॥ दत्ताऽभयं च भुजदण्डयुगं विलोक्येति ॥ तथाचासुरादेर्विभ्यत इन्द्रादेरप्यभयमदं लोकपालास्पदम्, अपराधिजनदण्डरूपभुजाद्वयाऽवलोकनपराणामस्माकमपि द्रादिपदाभिलाषो नोपपद्यते । इन्द्रादीनामपि भुजदण्डयोर्निविष्टत्वादिति भावः । एहिकैश्वर्यवाञ्छाऽप्यस्माकं नास्तीत्याशयेनाह ॥ वक्षः इति ॥ श्रिय एकं मुख्यं रमणं वक्षःस्थलं विलोक्य । चकाराद् धर्मस्यापि सग्रहः । तथाच सर्वत सप्लुतोदकहृदवद् तद्भूतसर्वपुरुषार्थं दास्यमेव प्रार्थयाम । तुलयाम लवेनाऽपि न स्वर्गं नाऽपुनर्भवम् * भगवत्सङ्गिसङ्गस्य मर्त्त्यानां किमुताशिष इति भगवत्सङ्गिसङ्गस्यापि यदैव माहात्म्यं तदा साक्षाद्भगवत्सङ्गस्य माहात्म्यं किमु वक्तव्यमिति भावः । एतेन भर्तृत्यागस्य पापरूपत्वं प्रकृते न सम्भवति दु खरूपफलाजनकत्वात् । भगवन्तमवलोक्य लोकद्वयस्यापि त्यक्तत्वाच्चेत्यपि सूचितम् । यच्च, अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् * जुगुप्सितं च सर्वत्र ह्यौपपत्यं कुलस्त्रिय इति पद्दोषाभिधानं तदपि प्रकृते नोपपन्नम् । भगवतो यथोक्तषड्विधगुणत्वादित्यपि ध्वनितम् । यद्वा, ननु किमवलोक्य दास्यभाव प्रार्थ्यते इत्याशङ्क्याहु ॥ वीक्ष्येति ॥ श्रियैकरमणमिति मुखस्यापि विशेषणम् । तथाच लोकोत्तरसौन्दर्य्यम् अवलोक्य दास्यो भवाम । ननु दृष्ट्वैव वाञ्छा न विधे-

था । भीखयोग्यानामापातरम्याणामपि बहूना पदार्थांना सत्त्वादि-साशङ्कानिरासायोक्तम् ॥ वीक्ष्येति ॥ भगवद्दास्यमेव सर्वापेक्षयो-त्कृष्टम् । अत्रैवाविधविग्रहप्रादुर्भावोऽस्माकं दास्यपददानायैव भगव-ता कृत इति च सम्यग्विचार्येत्यर्थ. ॥ श्रियैकरमणमित्यनेन सर्वो-त्तमा चतुराशरोमणिभूता श्रीर्यत्र सर्वभावेनासक्ता तत्र का वयं नरा-ण्यो दास्येऽप्यनधिकारिण्योऽत श्रियैकरमण गुणादिकमवन्यो-पयाऽत्र यद्विचारणीयं तल्लक्ष्म्यैव स्वयंवरकाले विचारितमिति विचार्यैम् । तदुक्तम् । नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित् तत्र न सङ्गवर्जितम् ॥ कश्चि महांस्तस्य न कामनिर्जयः स ई-श्वर किं परतो व्यपाश्रय ॥ धर्मः क्वचित् तत्र न भूतसौहृदं त्यागः क्वचित् तत्र न मुक्तिकारणम् ॥ वीर्यं न पुंसोऽस्त्य-जवेगनिष्कृत न हि द्वितीयो गुणसङ्गवर्जित. ॥ क्वचिच्चिरायु-र्न हि शीलमङ्गलं क्वचित्तदप्यास्ति न वेद्यमायुष ॥ यत्रोभयं कुत्र च सोऽप्यमङ्गल सुमङ्गल कश्चन काङ्क्षते हि माम् ॥ एवं विमृश्याव्यभिचारिसद्गुणैर्वर निजैकाश्रितसद्गुणाश्रयम् ॥ वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितमिति । तस्माद-स्मत्प्रवृत्तिर्नाऽविचारप्रयुक्ताऽतो नोपदेशसहस्रैरपि निरोद्धुं श-क्यात भाव सूचित. ॥ अनभिज्ञापक्षे, ननु दास्य देहीति भव तीभिरुक्त, तत्र मूल्यं श्रुत्वा यत् कर्तव्यं तत् करिष्यामीत्याशङ्क्य लब्धाऽनल्पमूल्या एव वयमतो मास्तु भवतस्तद्दानचिन्तेत्याशयेनाहु' वीक्ष्येति ॥ अलकै. ॥ केशप्रान्तभागै. शोणत्वक्कोष्णीषधारणसमये तदधोभागे लसद्विराटनमनाच्छादितम् । चूडावधानबर्हापीडधारण समये कुञ्चितरनतिदीर्घैरलकैरीषद्वृतमाच्छादितम् । अभ्यङ्गोद्वर्तना-दिसमये आसमन्तादावृतमाच्छादितं मुखं वीक्ष्येक्षणाभ्यां सम्य गास्वाद्य । अनेन मुखोर्ध्वभागशोभोक्ता । तथा कुण्डलयो. समग्र

भेदेनाऽलकैरनावृतयोरपिदावृतयो सम्पूर्णावृतयोरचपलयोरीष चपलयोरत्य तचपलयोश्चालङ्कारप्रतिबिम्बरूपा श्रीर्ययोस्ते गण्डश्च ले यस्मिंस्तत् । अनेन पार्श्वयो. शोभोक्ता । अपरे सुधा यस्मि स्तच्च हसित महसितपूर्वकमवलोको यस्मिंस्तद्, हसित चावलोक श्चेति द्वन्द्वैक्य वा । अनेन मध्याधोभागशोभा । तथाचैतावदेव मूल्य कोटिचि तामणिविचित्ररत्नखचितमन्दिरसखलोकादिलभ्या ऽमृतादेरप्यधिकमस्माकम् । तव च सहजत्वादनायाससाध्यमिति । यथोक्तमूल्येन जात चास्माक दास्य न किञ्चिदपि वक्तव्य, कर्त व्य वा शिष्यत इति भाव. । लोभविशेषोत्थानात् सौरभ्यविशेषा घ्राणाद्वाऽधरे सुधानुमानम । ननु नैव वाच्य, युष्मत्पतिभ्यो राज्ञश्च विभेम्यहमित्याशङ्क्य, किमेव मवक्षोपलब्धस्वसामर्थ्य गोपायसी त्याशयेनाहु. ॥ दत्ताऽभय च भुजदण्डयुगम ॥ तथाचा याऽभय ङ्करभुजदण्डालङ्कृतस्य तव नाऽस्ति भयसम्भावनेति भाव. । अनेन गोवर्द्धनधारणादिना दत्ताभयेभ्योऽस्मत्पत्यादिभ्यस्तेनैव दत्ताभयेभ्य इन्द्रादिभ्यश्च भयाऽभावाद् तव दास्ये स्वीकृते नास्त्यस्माक लोकद्वयेऽपि भयशङ्केत्यपि ध्वनितम् । गाढालिङ्ग नेन कामभयहारित्वमप्यत्र व्यङ्ग्यम् । दण्डपदेन सुदृत्तत्वादि शोभोक्ता । एव व्यञ्जितेन वीररसेन शृङ्गाररसोऽपि पुष्टो भवति । ननु तथापि परदारसम्ब धलाञ्छनान्निष्कलङ्कोऽह विभेमीत्याशङ्क्य श्रीरेखोपरि तर्जनीं धृत्वा पृच्छ न्त इवाहु ॥ वक्ष इति ॥ श्रिया कर्त्री एक श्रेष्ठ रमण यस्मिंस्तत् । तथाच, हे निष्कलङ्काग्रगण्य, यदि कलङ्काद् विभेषि तर्हि श्रीमन्नारायणभार्या लज्जया गृहीतरत्ना रूपा किमिति वक्षस्युद्वहसि । तस्मा मैव वोचस्त्व तु ब्रह्माण्डस्या न्तर्बहिर्वावस्थितस्य कस्यापि कामपि नारी न सक्ष्यसीति सम्यग् जानीमो वयम् । अतस्तादृश स्वसामर्थ्य माऽवलोपयेति भाव: ।

क्रियाद्वय च स्वानुरागवैशिष्ट्यस्य, मुखे चुम्बन, भुजवक्षसोरा लिङ्गनमिति प्रयोजनद्वयस्य च व्यञ्जनाय । अत्र वीनां पक्षिणा-मीक्षणीयेतिश्लेषेण स्वनेत्राणा खञ्जनत्वम् । तत्रालकाकुण्डलपा शयोरुन्दुबन्धः । गण्डयो पद्मास्थानत्वम् । सुधाया आहारत्वम् । हसितावलोकमिति तत्रैवयो स्वनेत्रखञ्जनाकर्षकत्वम् । भुज वक्षसो सञ्चारवेदीत्व च व्यज्यते । तथाच यथोक्तस्वरूपदर्शन जनितासक्तिमदन्तःकरणाना महाजालरुद्धनयनखगानाम् अस्माक, मतियान, नेत्यादिवाग्वज्रप्रहारेण हृदयानि मा विदारयेत्याशय । मानिनीपक्षे, ननु कथ तर्हि ममाङ्गानि निरीक्षमाणा एव तिष्ठतेति चेत् तत्राहु ॥ वीक्ष्येति ॥ त्रिलोक्यापि किं वय दास्यो भवामेति काका नैवेत्यर्थ । यद्वा, ननु साहस मा कुरु, ममाङ्गानि विलोक्य विचार्यं च वक्तव्यमित्याशङ्क्याहु ॥ वीक्ष्येति ॥ तथाच न वय तव समकोटिस्त्रियैरपि धैर्याच्चालयितु शक्या इति भाव । यद्वा यदि तवास्मान् दासीकर्तु महत्युत्कण्ठा वर्तते तर्हि योषिद्रूपस्य तव विश्वासाभावात् स्वपतिं कञ्चन दर्शय, भवतु, तद्दृष्ट्वा वय दा स्यो भविष्याम इति नर्म व्यञ्जयन्त्य आहु ॥ वीक्ष्येति ॥ वक्षसि स्वश्रिया युक्तो यस्तव एको रमण कान्तस्त, दत्ताभय भुजदण्ड युगलन्त विलोक्य वय दास्यो भविष्याम । तथा बहुस्वख्यापना यैकैतुक्तव । सोऽस्माक प्रदर्शनीय इत्युपहासोक्ति ॥

निवृत्तिपक्षे, चित्तैकाग्र्यास्पदस्य मुक्तानुग्रहार्थं गृहीतलीला विग्रहस्य भगवतो मुखादिक विचार्य तथैवालोक्य च वय तवैव दास्य प्रतिपद्याम इति, वीक्ष्य इति ॥ तथाच समस्तोपासनाविधायिश्रुतित त्पर्यगोचरस्यैवविधस्वरूपस्य भगवतोदास्यनैवोद्धारो, ना यथेति भाव ॥ २९ ॥

ननु युष्माकमपि भावोऽपेक्षित, स च यथा मन्त्रश्रवणादिना

भवति, न तथा मत्तमाकर्णयति मयोक्तमेतत् किमर्थं लोकविद्विष्ट मार्गानुसरणं कुरुत, सूद्गता मच्छ्रवणादिकमेवाचरतेतिचेत् तत्राहुः

का स्त्र्यङ्ग! ते कलपदामृतवेणुगीत-
समोहिताऽऽर्यचरितान्न चलेत् त्रिलोक्याम् ॥
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं
यद् गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ॥ ४० ॥

केति ॥ शास्त्रस्याधिकारश्रवणात् स्त्रीणां चैतदुपदिष्टार्था ऽनुष्ठानेऽशक्तत्वाद्योक्तोपदेशो न युक्त । तस्मात् पुरुष एवैवमु पदेष्टव्य इति द्योतनाय, का स्त्रीत्युक्तम्। किञ्च, समाहिता एव धर्मा धर्ममर्यादां विचारयन्ति, न तु मोहिताः । सम्यग् मोहिताश्चेत् किमु वक्तव्यमित्याशयेनाहुः ॥ त इति ॥ तव समस्तजीवसम्मोहक मायाशक्त्युपेत कलपदामृतमयं गीतं तेन समोहिता । तव वेणु गीतमिति सविशेषणम्, अमृतेति प्राणस्य, कलपदेत्यन्तःकरण स्य व्यामोह उक्तः । आर्येति पाठे, कलान्यव्यक्तमधुराऽक्षरा णि पदानि यस्मिन्नद् आयतं दीर्घमुच्छलस्वरालापभेदस्तेन स- म्यग् मोहिता का वा स्त्री आर्यचरितात् शिष्टाचारान्निजधर्मान्न चलेत् । या एवमन्येन न चलति सा चतुर्दशभुवनेषु काऽपि नास्ती त्यर्थः । तथाच सर्वासामेवास्माकमुपालम्भो न युक्तः । किञ्च, निगमे न खलु कश्चिदुपाय सर्वलोकपरितोषकरो यः * सर्वथा सहितमाचरणीयं, किं करिष्यति जना बहुजल्प * इत्यु क्तत्वाद् दूरतः परमेकारत्वात्तामवगत्यागो न युक्तः । अ न्यथा सर्वेषा धर्मजनानामिमत्र धार्मोऽपि केनापि क्रियेताऽत परस्माकारता त्रकर्म नानुष्ठेयम् । तत्र परब्रह्मणस्तवाराधने स

र्धकर्मफलभूतो नास्ति परलोकनाश । त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोऽथ पतेत् ततो यदि * यत्र क्व वाऽभद्रमभूदमुष्य किं, को वाऽर्थ आप्तोऽभजतां स्वधर्मतः * न वै जनो जातु कथञ्चनाव्रजेद् मुकुन्दसेव्यन्यवदङ्ग संसृतिम् * स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जन इत्यादिशास्त्रात् । सम्भावितस्य चाऽकीर्तिर्मरणादतिरिच्यते इत्यादिशास्त्रं तु जिजीविषु-परलोकद्वयविरुद्धकर्मनिन्दापरम् । शिष्टनिन्दापरं च । तत्र वयं त्यक्तसर्वैषणसन्यासिसदृशा न त्वच्चरणसङ्गमरहितजीवनाभिलाषा, नाऽपि परलोकविरोधिकर्मपरा, नाऽपि भगवत्स्वरूपाभिज्ञशिष्टनिन्द्याचाररता इति भाव । का स्त्रीत्यनेन, यत्मोहिता पुरुषा अपि चलितास्तन्मोहिता स्त्री का न चलेदित्यपि सूचितम् । किञ्च यथा सूर्येण दिनं, चन्द्रमसा रात्रिस्तथा त्रैलोक्यस्यापि सुभगत्वं सौन्दर्यं येन भगवद्रूपेण तद् त्रैलोक्यसौभगमिदमनुभूयमानं रूपं च निरीक्ष्य यद् यतो गोद्विजद्रुममृगाः पुलकानि अबिभ्रन् अबिभरु । गवादीनामनभिज्ञाशिरोमणीनामपि यद्दर्शनादनुरागो दृश्यते । तेन त्वत्स्वरूपाऽभिज्ञानरसज्ञानामस्माकं स्वधर्मत्यागे किं वाच्यम् । तत्रापि त्वद्द्योतकशब्दश्रवणमात्रेणापि निजधर्मत्यागो युक्त, किं पुनस्त्वदनुभवेनेति भाव ॥ अनभिज्ञापक्षे, ननु नेयं लक्ष्मी', किं तु मद्वक्षसि सहजा लक्षणविशेषरूपा स्वर्णरेखा विराजते । तां दृष्ट्वा पतिव्रताशिरोमणिभूता लक्ष्मीमपि, स्वयं दुष्टोऽन्यानपि दूषयतीति न्यायमनुसृत्य दूषयितुं प्रवृत्तास्तस्या मत्तश्च भयं न कुरुतेत्याशङ्क्य, न वयं कामपि दूषयाम', किं तु सर्वधर्मध्वंसनाय त्वमेव विधात्रा सृष्टोऽसीति सरोषविभ्रममाहु ॥ केति ॥ अङ्ग हे कृष्ण, तव कलपदाऽमृतवेणुगीतसमोहिता आर्यचरितात् पातिव्रत्यलक्षणान्निजधर्मात् का स्त्री न चलेदपि तु सर्वाऽपि चलेदे

न । अतस्त्वत्कर्तृकं गीतमेव दूषयति । धर्मत्याजनलक्षणं चञ्चलत्वे प्राप्स्यत्येवेति भावः । न केवलं तव गीतमेवैवंविधम्, अपि तु रूपमपीत्याहुः ॥ त्रैलोक्यसौभगमिति ॥ ननु नास्ति मम गीतादेरयं स्वभावः, किं तु स्त्रीणामेवायं स्वभावो यत् यत्किञ्चिदपि गीतादिकमुपलभ्य मोहिता भवतीति चेत् तत्राहुः ॥ यद्गीति ॥ याभ्यां गीतरूपाभ्याम् । यद्वा, नन्वेवं पतिव्रताभिरुपहसनीया भविष्यथेत्याशङ्क्य, तव गीतादिप्रसादाच्चतुर्दशभुवने उपहासकराऽपि न भविष्यति । सर्वासां मोहावश्यम्भावादित्याशयेनाहुः ॥ केति ॥ किञ्च चराचरात्मकं सर्वमपि तव गीतादिना मोहितम् । अतः का उपहासशङ्केत्याशयेनाहुः ॥ त्रैलोक्येति ॥ मानिनीपक्षे, ननु यदि मदीयगीतादिकं भवतीनां नक्षोभकरं, तर्हि किमर्थं चलितुमिच्छथेति चेत् तत्राहुः ॥ केति ॥ गीतमोहिताऽपि आर्यचरिताद्धेतोस्ते त्वत्तः सकाशात् का स्त्री न चलेत्ापयायात् । किञ्च, यस्मात् गवादयोऽपि सपुलकास्तदिदं त्रैलोक्यसौभगं रूपं दृष्ट्वा च सदाचारभङ्गभिया का नापयायात् । सुन्दरीणां सुन्दरसन्निधौ स्थितिर्निन्दानिदानमिति मोहिताऽपि यदि चलेत् तन्मोहिता वयं कथं नापसराम इति भावः । यद्वा, तवास्ति स्वगीतादिप्रयुक्तवशीकार इति वयं जानीमस्तथापि तेऽस्मान् प्रत्यऽकिञ्चित्करं तेत्याशयेनाहुः ॥ केति ॥ मोहितानामेव वशीकारो भवति । या तु तव तादृशगीतेन न मोहिता सा स्त्री का आर्यचरिताच्चलेत् । तादृशी काऽपि नास्तीत्यर्थः । किञ्च, यतो गवादयः सपुलकास्तदिदं त्रैलोक्यसौभगं स्वीयं रूपं तु निरीक्ष्य स्वरूपोत्कर्षाभिज्ञा का सदाचाराच्चलेदिति ॥

निर्वाच्यपक्षे, तस्मात् त्रिलोक्यां नास्त तथाविधा श्रुतिर्या त्वां न प्रतिपादयेदित्याहुः ॥ केति ॥ तव सर्वे वेदा यत्पदमामनन्ति,

सदेव सोम्येदमग्र आसीदित्यादिरूप यत् कल्पदाऽमृतेरेणुगीत तदेव, समा=सम्यक्प्रमाणम । प्रत्यगभिन्नपरमात्मपराणामुपनिषदां विषयस्य कालत्रयावाध्यत्वात्तद्विषयकप्रमाणस्य पारमार्थिकतत्त्वावेदकत्वरूपप्रामाण्यवत्त्वात् सम्यक्त्वम् । तदितरप्रमाणानां व्यवहारदशायां बाधाभावात् । व्यावहारिकतत्त्वावेदकप्रामाण्यकत्वादसम्यक्त्वम् । तथा, ऊहितो मनननिदिध्यासनपूर्वकमवगतो यः प्रत्यगभिन्न परमात्मा तस्य चरितात् सृष्टिकर्तृत्वादिलक्षणाद् काऽपि स्त्री तदनन्यपरा श्रुतिर्न चलेन्न प्रचलति । अयमर्थः । सृष्टिप्रतिपादकश्रुतीनां सृष्टिमुप यस्य तत्रिषेधाभिधानादऽसिद्धिकत्समद्वितीयत्वं प्रतिपादितं भवतीति परम्परया निरस्ताखिलद्वैतविभ्रमे अखण्डे सच्चिदानन्दैकरसे परमात्मनि तात्पर्यम्। अन्यथा वा यौ प्रतिषिद्धस्य रूपस्यान्यत्र सत्त्ववद् ब्रह्मणि प्रतिषिद्धस्य द्वैतस्यान्यत्र सत्त्वशङ्का स्यात् । उपासनाप्रकरणपठितसगुणब्रह्मप्रतिपादिकानां तूपासनाविषयेक्षितगुणारोपमात्रपरत्वं, न गुणपरत्वम् । निर्गुणप्रकरणस्थाना निषेधविध्यपेक्षितनिषेध्यसम्पादकत्वेन विनियोग । कर्मप्रकरणपठितानां सयोगपृथक्त्वन्यायेन विविदिषायामुपयोग इति काऽपि श्रुतिः परमात्मचर्यावर्णनान्न चलतीति । ननु महेन्द्रादिप्रतिपादनपरतयोपलभ्यमानानां तासां कथं परमात्मपरत्वमितिचेत् तत्राह ॥ त्रैलोक्येति ॥ इदमनुभूयमानं रूपं सत्तास्फूर्त्यात्मकं, येन सेश्वरं जगत् सुन्दरं दृश्यते तदालोक्य तत्तद्देवादिप्रतिपादनपराणां मध्ये च काऽपि न चलति । यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा * तत्तदेवावगच्छ त्वं मम तेजोऽशसम्भवमिति भगवत एव इन्द्रादिरूपेणावस्थानाभिधानादिति भाव । इदमेवोदाहरणे स्पष्टयति ॥ यदिति ॥ येन रूपेण, सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् * सर्वतः श्रुतिमल्लोके

सर्वमावृत्य तिष्ठतीति सर्वात्मभावप्रतिपादनादिति भावः ॥ ४० ॥

अथोत्तरदिग्गता प्रार्थयन्ते ॥

व्यक्तं भवान् व्रजभयार्त्तिहरोऽभिजातो (१)
देवो यथादिपुरुषः सुरलोकगोप्ता ॥
तन्नो निधेहि करपङ्कजमार्त्तबन्धो
तप्तस्तनेषु च शिरःसु च किङ्करीणाम् ॥ ४१ ॥

व्यक्तमिति ॥ आदिपुरुषो देवो भवान्, यथा वामनादिरूपेण सुरलोकगोप्ता जातस्तथेदानीं व्रजभयार्त्तिहरोऽभिजातः प्रकटित इत्यस्माकं व्यक्तं निस्पष्टमस्ति ज्ञानम् । वसुदेवगृहेऽवतीर्णस्य सतो व्रजनिवेशात् । एवं मुख्यमवतारप्रयोजनं जानीमः । तच व्रजस्थानां गोपादीनां भयं भगवता नाशितम् । सम्प्रति तप्तानामस्माकमार्त्तिहरणमवशिष्यते । तदवतारसार्थक्याय तदावश्यकमिति भावः । ननु तथापि मर्यादयैवार्त्तिहरणं युक्तमतः कामार्त्तिज्ञानेन हरिष्यामीत्याशङ्कानिरासायोक्तम् ॥ देवः ॥ यथादिपुरुषः ॥ सर्वकारणभूतः । ततश्च देवासुरादिषु समोऽपि इन्द्रादिस्वभक्ताभिलाषानुसारेणोपेन्द्रादिदेवो भूत्वा दैत्यान् मारयन् वैषम्यमङ्गीकरोति तथाऽस्मदर्थं गृहीतगोपालावग्रहः स भवानस्मदार्त्तिहरणाय मर्यादोल्लङ्घनमपि करोत्विति भावः । तस्माद्, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति स्वप्रतिज्ञामनुसरेत्याहुः ॥ तदिति ॥ यस्मान्मनोरथानुसारिफलप्रदातृत्वेन भवान् प्रसिद्धस्तस्मान्नोऽस्माकं स्तनेषु कामार्त्तिनाशाय करपङ्कजं निधेहि । तत्र योग्यसम्बोधनम् ॥ हे आर्त्तबन्धो ! शिरःसु च निधेहि । कामोपाधका

(१) व्रजजनार्त्तिहर इति पाठान्तरम् ।

ऽर्पीय भवतीना भक्ति शुद्धायामेव तस्या पयस्यतोत्याश्वसना-ऽर्थमिति भाव । यद्वा, अस्माकमेव भयार्तिहरण तवाऽनारस्य सुखप्र प्रयोजनम् । तेनास्माक हृदयतापनिवृत्त्यर्थं स्तनेषु करपङ्कजम् अमृतस्राविखात् तापनाशक निधाह । ससारभयनिराशाय च शिर सु तन्निधेहीत्यर्थ । यतो वय किङ्कर्योऽतोऽस्मद्भयार्तिनाशनमर्हे च नाम्ना यातयसेऽत्य हु ॥ किङ्करीणामिति ॥ अभिज्ञापसे, तस्मादल चातुरीभिव धनैर्वाभिरभावे, सवथाप्यस्मदभिलषित सम्पादयस्वाहु ॥ व्यक्तभिति ॥ यथा अदिया जात आविपुरुषो दर सुरलोकगोप्ता तथा व्रजस्य दार्त्यादिभय वातवर्षादिपीड़ा च हतु व्रजेश्वर्या भवानभिजात । नारायणसमो गुणे रित्युक्तत्वात । व्यक्तभिद, न तु गूढमतोऽस्माक कामादभयार्तिहरणमपि स्वव्रतरक्षणायाऽवश्यकमिति भाव । नव युष्मद्वङ्कीकारेण युष्म पतीना भयार्ती भविष्यतस्तद्धरणार्थमभिजातस्य तदपदानमनुचितमिति चाह्वाह । अङ्गणे सत्यस्म हरण वक्यम्भावाद्गम-ज्य यादृीना नरकगयार्तिनाशस्यास्मद्ग्रहण विनाऽसम्भवात् । भवतु स्वस्याभीष्ट तमाने व्रतमित्यपेक्षायामाह ॥ तादृति ॥ यस्मादेव तस्मात् तद्वेवस्माक स्तनेषु करपङ्कज, निधेहि=सम्यक्कुरुष्व । तत्र हस्तस्य पङ्कजरूप वात् सूर्यतापेन कमलस्येव तस्यास्मत्तापेन सुखमेव भाव्यतीत व्यङ्ग्यम् । यतो हे आर्तबन्धो नो चेदिद नाम निरर्थक भविष्यतीति भाव । सदे यमाह ॥ किङ्करीणा शिर सु च निधेहि ॥ इत परमेनानन्यात्वेनास्माक दासीकुर्विति भाव । यद्वा, शिर सु करपङ्कजस्यापान त्यागभयनिवर्त्तय । यतो वय किङ्कर्य । एव चार्तेव धु । तस्मादस्माकमात्यर्दिक त्वमिन्यन्मम, अ पनिमित्त तापयस्यमिति भाव । यद्वा नास्तीदमनुचितम् । यथा वय किङ्कर्य पत्नीक्षार्थे न तथा

कर्त्तव्यमिति रसोक्तिः ॥ मानिनीपक्षे, बलात् स्तनादौ हस्त धर्त्तुं गन्तुमालक्ष्याहु' ॥ व्यक्तमिति ॥ व्रजस्य भयार्त्तिहरणाय जातस्त्वमस्माकमुभयसाधने कर्मणि नियोजयितुं नार्हसीति भाव । तस्मात् करपङ्कज, हे आर्त्तबन्धो धर्मभङ्गभयार्त्तिनाशक, हे तप्त ! कामाग्नितापित, किंकरीणा दासीनामपि, किमुत सतीनामस्माक शिरःस्वपि ना निधेहि, किमुत स्तनेषु नो निधेहीति । यद्वा, व्रजभयार्त्तिहरणायाभिजातस्य तस्य तत्र तद्द्वारहरणादिना तत्प्रदान नोचितमिति भाव । यद्वा, बलात्कारेण यत्त्वस्मान् स्पृशसि तर्हि प्राणान् वय त्यक्षामस्तेन सर्वेषा भयार्त्ती भविष्यतस्तच्च तथाभूतस्य तव नाञ्चितमिति भाव । हे कामार्त्त, किंकरीणामपि त्वदभिलाषरहितानामस्तेषु स्तनेषु शिरःसु च करपङ्कज न निधेहि । यद्वा, या न किंकर्य्यस्तासां तत्स्तनेषु करपङ्कज निधेहि । उक्तिमत्युक्तिमद्वाक्य सलाप इति कीर्त्यते * इत्युक्तत्वात्, स्वागतमित्यादि, एतदन्त प्रकरण सलापाख्योऽनुभाव ॥

निवृत्तिपक्षे, किञ्च, जगत्कारणत्वेन प्रतिपादितो भवान् सर्वाधिष्ठानभूतोऽतस्त्वय्यध्यस्तस्य प्रतिपादन त्वत्प्रतिपादनमेवेत्याशयेनाहु ॥ भगवान् देव' स्वयम्प्रकाशश्चिदानन्दस्वरूप । तथा च म श्रवर्ण, एको देव इति । अत एवादिपुरुष । सोऽकामयत बहु स्यामित्यादि । जगत्कारणत्वेन प्रतिपादितोऽभिजात । स च त्वमेवाभवत्, तत् सृष्ट्वा तदेवाऽनुप्राविशदित्यादिना सर्वस्वरूपापन्नत्वेन निरूपितो यथा सुरलोकगोप्ता तथा व्रजस्य काण्डत्रयात्मकस्य वेदस्य भयार्त्तिहरोऽपीति व्यक्त निश्चितम् । यद्वा, यथा आदपुरुषो देवो भगवान् वामनादिरूपेण सुरलोकगोप्ताऽभिजात । तथा मत्स्यरूपेण व्रजभयार्त्तिहरोऽप्यभिजात इति व्यक्तम् । यद्, शङ्कितवेदभयार्त्तिहरणार्थं कृष्णद्वैपायनादिरूपेण प्रकटित

इति व्यक्तमित्यर्थः । यस्मादेव तत् तस्मात् करपङ्कजम् । करोतीति व्युत्पत्त्या करशब्देनाज्ञानमुच्यते । तल्लक्षणात् पङ्काज्जातमधिकारयेन्त करण नोऽस्माक श्रुतीना शिरःसु शिरोभागेषु वेदान्तेषु निधेहि तद्विचारार्थं प्रवर्तय । यथा तप्तस्तनेषु ब्रह्मपरत्वाभावप्रतिपादनेन तप्तेषु स्तनस्थानीयेषु कर्मोपासनद्वारा ब्रह्मपरभागेषु च निधेहि । वेदैश्च सर्वैरहमेव वेद्य इत्यादिमेरणेनेति भावः । यतो षय सर्वा अपि भवतः किंकर्यस्त्वय्येव तात्पर्यवत्यो, भवाँश्चार्तेव दुस्तत्तद्वादिभिरसुरैश्च दत्तपीडानामस्माक संसारार्तानां मुमुक्षूणा च बन्धुरतो योग्यमिदमिति सबोधनाशयः ॥ ४१ ॥

ततः किं वृत्तमित्यपेक्षायामाह ।

श्रीशुक उवाच ॥

इति विक्लवित तासां श्रुत्वा योगेश्वरेश्वर ॥
प्रहस्य सदय गोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥

इतीति ॥ इत्युक्तप्रकारेण तासां त्रिविधाना गोपाङ्गनाना विक्लवित प्रेमपारवश्यमिलितप्रार्थनोपालम्भनिषेधरूप भाषित श्रुत्वा तच्छ्रवणाभिलाप पूरयित्वा प्रहस्य प्रहासेनापि वैकल्यमुत्पाद्य । यद्वा सुहृद्भक्त भवतीभिरित्यपि तदुक्तानुमोदने रत्याख्यभावव्यञ्जनाय प्रकर्षेण हसित्वा । यद्वा, महासेनाऽभिज्ञा प्रति—युष्मच्छिष्टया प्रीत्याऽत्यर्थमह प्रसन्नोऽस्मीति । अनभिज्ञा प्रति—अहोऽद्यैकस्मिन्नेव दिने मया गृहीतेनाऽत्रहित्थाभावेन ता भवत्यो लज्जाया श्राद्ध कृतवत्य इति ॥ मानिनी प्रति, अहो अतिकठिना भवत्यो, जित युष्माभिरिति सूचयित्वा सदय यथा भवति तथा, गोपीररीरमत् रमयामास । अभिज्ञापक्षे, सदय सकरुणम् । अनभिज्ञापक्षे, सस्नेहम् ॥ मानिनीपक्षे, मन्द्र अयः शुभावहो विधियत्र तद् गोपीररम

यदित्यनेन तासा मनोरथानुसारेण भगवान् प्रेम्णा आसक्त इत्येव मतीन सन् रमयामास, स्वय तु असक्त एवेति सूचितम्। पूर्णकामस्याऽसङ्गनिर्विकारस्य परमात्मनो रमणे दयैव हेतुर्न तु कामेनेति बोधनाय सदयमित्युक्तम् । आत्मारामोऽपीत्याश्चर्यबोधनाय । अहो तासा प्रेममाहात्म्यम् । साकाङ्क्षात्मारामवशीकरणगुणगणोऽपि स्वयमात्मारामोऽपि ताभिर्वशीकृत इति । ननु आत्मनि आराम क्रीडा यस्य तस्य निरिन्द्रियस्याऽसङ्गस्यैकस्य असख्याताभिस्ताभिः कथ रमण सम्भवतीत्याशङ्क्याह ॥ योगेति ॥ योगा. सौभर्यादयस्तेषामीश्वरा रुद्रादयस्तेषामपीश्वर' । तथा अघटितघटनासमर्थ अज्ञानिप्रतीत्यनुसारेण प्रपञ्चभानवत् तत्प्रतीत्यनुरोधेन रमणोपकरणभानस्याप्यविरुद्धत्वादिति भाव । यद्वा, अरीरमदपि, वस्तुत आत्माराम एव । यतो, योगेश्वरेश्वर' । यद्वा, ताभि रमणोऽप्यात्मस्वरूपाभिस्ताभिरारामस्तत् क्रीडा यस्येति, न तस्य लौकिक रमणमिति भाव ॥

निरुक्तिपक्षे, इति यथोक्तप्रकारेण तासा श्रुतीना सदैव यथार्थित श्रुत्वा, महत्त्व गमनो भूत्वा, सदय यथा स्यात् तथा आत्मारामोऽपि स्वमर्मगतचिद्रूपत्वात् प्रमाणप्रवृत्त्ययोग्योऽपि योगी श्रुतीररीरमत् । अर्थानिरसनद्वारा तद्विषयतामगच्छत् । यतो योगेश्वरस्य सकलजगदुत्पत्तिसमर्थस्याव्याकृतस्य माया दिशारूपनिपाधस्येश्वर । तथाच । जगज्जन्मादिकारणत्वप्रतिपादनेन श्रुतयो मयि पर्यवस्यन्तीत्यधिकारिचेतसि दृढतरनिश्चयमुत्पादितवानिति भाव ॥ ८२ ॥

रमणप्रकारमाह ॥

ताभि समेताभिरुदारचेष्टित

प्रियेक्षणोत्फुल्लमुखीभिरच्युत ॥

उदारहासद्विजकुन्ददीधिति-
र्व्यरोचतैणाङ्क इवोडुभिर्वृत ॥ ४३ ॥

ताभिरिति ॥ यथोडुभिस्ताराभिर्वृत एणाङ्क पूर्णचन्द्र शोभते तद्वत् ताभिर्वृतोऽच्युतो व्यराचत । विशेषेण शोभित । अनेन दृष्टान्तेन अन्योन्यापेक्षया शोभावत्त्वम् । गोपीना तन्वीत्व, स्वर्णवर्णत्व व्यज्यते । ताभि समीपमागताभिरादौ समेताभिर्मिलिताभिर्भगवद्भिश्च ॥ उदारचेष्टित ॥ उदाराणि अलौकिकानि निर्मलानि सुखन्यादिफलदानि चेष्टितानि करस्पर्शनपुष्पार्पणकटाक्षादिरूपाणि यस्य । तस्य तादृशचेष्टितैस्तासा रसोदयमाह ॥ प्रियकर्तृकमीक्षण, स्वकर्तृक वा तदीक्षण तेनोत्फुल्लानि विकसितानि मुखानि यासाम् । अनेन भगव मुखस्य च द्रत्व, त मुखाना कुमुदत्व बोधितम् । अथ भगवतोऽपि रसोदयमाह ॥ उदारो हासो यया सा द तल्लक्षणकुन्दपुष्पकान्तिर्यस्य स । उदारहासेन द्विजकुन्देषु दीधितिर्यस्येति वा । तादृशीभिस्ताभि', मनस्यपि रसोदयेऽपि च्युतिर्न जातेति ज्ञापनाय अच्युत इत्युक्तम् । यद्वा, तथान्वयेऽपि स्वस्वरूपादप्रच्युत एवासीदित्यच्युतपदेन वनितम् ॥

निवृत्तिपक्षे ताभि सर्वाभि०, गतिसामान्यादिति न्यायादेकस्मिन्नद्वितीये ब्रह्मणि तात्पर्येण समन्विताभि श्रुतिभि । उदाराणि सृष्टिकर्तृत्वादीनि चेष्टितानि यस्य स । प्रियध्यानदृक्पस्य परमात्मन ईक्षणाय तद्विषयकप्रेमोत्पत्तये उत्फुल्लानि विकसितानि तत्प्रतिपादनोन्मुखानि मुखस्थानीयानि पदानि यासा ताभि । उदारो यो हास = महामाया । हासो जनो मादकरी च माया * इत्युक्तत्वात् । स्नेहकला द्विजानि * इत्युक्तत्वाद्, द्विजपदेन स्नेहकला उच्यते । स्नेहकलालक्षणा द्विजा द ता यस्य, स च ऽसौ

कु दो मुकुन्द। स एव दीधितिः प्रतिमारूपापन्ना कीर्तिर्यस्य स । कु दो माघ्ये मुकुन्दे च भ्रमिनिध्यन्तरे पुमानिति मेदिनी । कुमुदः कुदरः कुद इति भारते ॥ ४३ ॥

अथोदारलीलाभिर्वनमपि शोभयन् व्यचरदित्याह ।

उपगीयमान उद्गायन् वनिताशतयूथप ॥

माला बिभ्रद् वैजयन्तीं व्यचरन् मण्डयन् वनम् ॥ ४४ ॥

उपगीयमान इति ॥ ताभिरुप समीपे गीयमानः । भक्तपराधीनत्वमेयसीजनमनोऽनुरञ्जकत्वमानवतीमानोद्दीपकत्वादिगुणगणालङ्कृतकृष्णनाम्ना पुन' पुनर्गीयमान , स्वय च शरच्चन्द्रादिमय गोपीजनप्रेममय च गीतमुद्ध ऊर्ध्वब्रह्मलोकपर्य तगामि गीत गायन् तदुक्त विष्णुपुराणे— कृष्णः शरच्चन्द्रमय कौमुदीकुमुदाकरम् ॥ जगौ गोपीजनस्त्वेक कृष्णनाम पुनः पुनरिति । ततश्चानुरक्तस्त्री शतयूथपस्तत्पतिः कामिनीरत्नाना पालक इति वा, तदधरपानकर्त्तेति वा । पुनश्च, वैजयन्ती मुक्तामाणिक्यमरकतेन्द्रनीलवज्राख्यरत्नरचिता स्वाभाविकीमैश्वर्य्यबोधिका कीर्त्तिमयीम् । पञ्चवर्णा वैजय तीति वचनात्। पञ्चवर्णपुष्पग्रथिता वा मालां बिभ्रद् वनमेव सर्व मण्डयन् अलङ्कुर्वन् व्यचरत् तासा कामोद्दीपनाय लीलागतिं कृतवान् । वनान्तर गतवानिति वा ॥

निवृत्तिपक्षे, उपगीयमानो मुनिभि', स्वय च कृष्णादिरूपेण, मत्तः परतर नान्यत् किञ्चिदस्ति धनञ्जय ॥ मयि सर्वमिद प्रोत सूत्रे मणिगणा इव । क्षेत्रज्ञ चापि मा विद्धि सर्वक्षेत्रेषु भारत । अनादिमत्पर ब्रह्म न सत्तन्नासदुच्यते । इत्यादिना स्वात्मान मुद्गायन् वनितास्थानीयश्रुतिशतयूथपस्तदर्थत्वात् तत्पतिः । तथाच सूत्रस्मृतिश्रुतिलक्षणप्रस्थानत्रयगम्य इत्यर्थः । तन्नमयीं

वैजयन्तीं मालां बिभ्रत् तदवच्छिन्नं सुवत्वादिरूपः सः । पञ्चरूपा तु या माला वैजयन्ती गदाभृत * सा भूतहेतुसघाता भूतमाला च वै द्विजेति विष्णुपुराणे । अन्तःकरणलक्षणं वा मण्डयन् व्यचरत् । सर्वासु तदृष्टिषु स एवाऽस्फुरदित्यर्थः ॥ ४४ ॥

नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥
रेमे तत्तरलानन्दिकुमुदामोदवायुना ॥ ४५ ॥

ततश्च नद्याः श्रीयमुनायाः पुलिनमाविश्योपविश्य तस्योपवेशनयोग्यतामाह ॥ हिमवालुकम् ॥ हिमवालुकं कर्पूरस्तद्वद्वालुका यत्र । शाकपार्थिवादित्वन्मयासः । तस्या नद्यास्तरलैस्तरङ्गैरानन्दयुक्तस्तत्कर । स चाऽसौ कुमुदामोदवॉश्च वायुस्तेनोपलक्षितम् ॥ आनन्दीति मान्द्यम् ।शैत्यसौरभ्ये स्पष्टे । यद्वा, यथोक्तवायुना हेतुना हिमवालुकम् । यद्वा, तत्तरलानन्दीति पृथक् पदं पुलिनविशेषणम् । तत्रोपविश्य गोपीभिः सह रेमे । जुहुपिति पाठे रमयाञ्चकारेति परेणान्वयः ॥

निवृत्तिपक्षे, नद्या बुद्धिलक्षणायाः, पुलिनं सात्त्विकं प्रत्ययमाविश्य प्रविश्य तत्तदारुह्येति यावत् । ना पुरुषः परमात्मा गोपीभिः श्रुतिभिः सह रेमे तदुक्तं भगवता । तेषामेवानुकम्पार्थमहमऽज्ञानजं तमः * नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति । तत्त्वाद्विषयाभिकाङ्क्षालक्षणतापस्य निवृत्तत्वाद्धिमवालुकस्थानीयं शान्तम् । अत एव, तस्या नद्यास्तरलास्तृष्णादिलक्षणास्तरङ्गास्तत्तरलास्तैः शान्ततरलैरानन्दि आनन्दाविर्भावसाधनम् । यत कुमुदामोदवायुः, कुं पृथिवीं मारावतारणादिना मोदयतीति कुमुदः परमात्मा कुमुदपुष्पस्थानीयः ।तत्सम्बन्धिहर्षो गन्धस्थानीयः। तद्युक्तो वायुस्थानीयो निरूढः प्राणवायुर्यत्र तत् ॥ ४५ ॥

एवं सर्वप्रकारेण तासां जातस्मरकेलित्वं सम्पाद्य सोपकरणं रसविलासचरितमाह ॥

बाहुप्रसारपरिरम्भकरालकोरु
नीवीस्तनालभननर्मनखाग्रपातैः ॥
क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणा-
मुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥ ४६ ॥

बाहुप्रसारेति ॥ तत्रादृष्टिविषयालिङ्गनमादौ दर्शयति । दूरे स्थितास्वयं विशेषं स्वयं बाहुप्रसारस्ततो बलादपि परिरम्भ आश्लेषस्ततः करादीनामालभना यालिङ्गनानि । तत्र करास्पर्शनं हस्तेन हस्तग्रहणम् । एवं कचोन्नयनार्थमलकाना स्पर्शः । बाहुरूर्ध्वमूरुस्पर्शः । रसोद्गमनार्थस्तत्तत्ताडनादयः कामयुद्धनिरूपका । नखक्षतादिभिस्तत्तत्स्थाने स्थितस्य कामस्योद्बोधायाभिधानात् । क्ष्वेल्या प्रमतोभनादि । तत्पूर्वकान्येवावलोकनानि हसितानि च तैः रसस्थापकव्रजसुन्दरीणां रतिपतिं कामम् उद्दीपयन् रमयाञ्चकार । ता रमयामास । संयुक्त कामो रतिपतिर्वियुक्तस्वप्निरूपः ।तत्राऽपि तासां सुखमेव प्रकटितवान् । न तु कामा तेन विरतिमुत्पादितवानिति भावः ॥

निवृत्तिपक्षे, अविवेकावस्थाया बाहुप्रसारादिभिर्जातो यो रतिपतिः कामस्तमुत्तम्भयन् नमयन् व्रजसुन्दरीणामुपनिषदः । कर्मणि षष्ठी । रमयाञ्चकार । अधिकारिचेतसि कामनिवृत्तिपूर्वकनिर्बोधितमखण्डेकरसानन्दस्वरूपमात्मानं प्रकटितवानिति भावः ॥ ४६ ॥

एवं सयोगशृङ्गारमुपपाद्य, न विना विप्रलम्भेन संयोगपुष्टिमश्नुते ॥ कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धते इ

ति भरतेनोक्तत्वात् तत्पुष्ट्यर्थं विप्रयोगमुपपादयितु पीठिका रचयति ॥

एव भगवत कृष्णाल्लब्धमाना महात्मन ॥
आत्मानमेनिरे स्त्रीणा मानिन्योऽभ्यधिकं भुवि ॥ ४७ ॥

एवमिति ॥ एव पूर्वोक्तप्रकारेण भगवत सर्वदानसमर्थात् स दान दत्तरूपात् कृष्णात् परिपूर्णत्वेन न्यूनतामात्ररहितत्वान्महात्मनो लब्धो मान आदरो याभिस्ता सत्य । सम्प्रति मानवत्यो बभूवु । भुवि स्त्रीणा समाजम ये प्रत्येक सर्वा एवात्मानमऽभि सर्वप्रकारेणाधिक च मेनिरे । स्त्रय प्रतिगर्वितमनसा बभूवु । दम्पत्योर्भाव एकत्र सतोरप्यनुरक्तयो * स्वाभीष्टाश्लेषवीक्षादिविरोधी मान उच्यते । अहेरिव गतिः प्रेम्ण स्वभावकुटिला तत । सनिमित्तोऽथ ना यू तिर्मानोदय उदीरित । तथाचात्मसमाना सती अन्या नास्त्यतोऽस्म,न् यदि प्रार्थयिष्यति तदा रस दास्यामस्तथा सत्यस्मत्प्रार्थनया यथा भगवानस्मद्दर्शने जातस्तथा तत्प्रार्थनया वयमपि भविष्याम इति रसार्थमेव भानो,न तु दोषरूप । भगवज्ज्ञापनया कृतत्वादिति भाव ॥

निवृत्तिपक्षे, इत्य प्रत्यगभिन्नस्य परमात्मन औपनिषदत्व म तिपाद्य ताभिरपि दुर्ज्ञेयतैव प्रतिपादितमिति बोधयितु दुर्ज्ञेयताम नेपादयमु पक्रमत ॥ एवम् उक्तप्रकारेण प्रतिपादिताद्भगवतो निर कुशैश्वर्यात् कृष्णाच्छुद्धात् सच्चिदान दरूपा महात्मन प्रत्यगऽभिन्नात् परमात्मनो लब्ध मान प्रामाण्य याभि । ततश्च, अस्य महतो भूतस्य नि श्वसितमेतद् यदृग्वेद इत्यादिश्रुत्या स्त्रीणा श्रुतीना भुवि ज पभूतो परमात्मनि प्रामाण्यवत्य सत्य , आत्मान मधिक मेनिर इत्यर्थ ॥ ४७ ॥

ततो भगवान् यत् कृतवांस्तदाह

तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ॥
प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥

तासामिति ॥ स्वात्मानमभ्यविकम्प्य यमानानां सौभगात्मा नाज्ञातमसाधारणतापादक मानस्य गाढावस्थारूप, येनाद्रणी योऽपि तिरस्क्रियते तादृश मद तद्धेतुभूतमनुनयाद्यसा यच्चित्तसमु त्रतिरूप मान च वीक्ष्य विशेषतस्तदुपलभ्य, मदस्य निरस्त्यर्थ ता सां प्रशमाय चित्तोन्नतिवारणाय मानशान्तये, तासा प्रसादाय प्रस न्नतया स्ववश्यतापादनाय केशवस्तत्रैवान्तरधीयत, न त्वं यत्र गच्छ न् कयाचिद् दृष्ट । केशा अशवो यस्य सन्तीति भारतीयव्युत्प त्त्या या शोभा तासां सा तद् दर्शने निरस्तेति व्यज्यते । यद्वा क श्च ईशश्च वशयतीति केशव । तथाच ब्रह्मरुद्रयोरपि रजस्तमो प्रशमेन वशीकरणसमर्थस्य तासा मदमाननिरसनेन वशीकरणे कि चित्रमिति भाव. । ननु मदमाननिरासायोपाया तर कुतो न रचितवानिति चेदसंभवात् । न हि प्रत्येकमभदन सभवति । एकस्या प्रथम प्रसादे सैवाद्यै कामिति प्रसादितैत्यऽपरस्या मानाधिक्योद्भवात् । तस्मात् सर्वा प्रति रासरस हातु प्रेमवर्द्धना ऽर्थ विप्रलम्भ. । यद्वा, सर्वासा मदमानयोः प्रशमाय, मेयस्या श्रीराधाभिधाया सख्या. प्रसादाय वक्ष्यमाणगत्यानुरोधेन तया सह तरधीयत । कशान् वयते सस्करोतीति केशव । तथाच के शप्रसाधनादितत्प्रेमोपायविधाने परमचतुर इति भाव ॥

निरुक्तिपक्षे, तासा श्रुतीना य सौभगमदस्त वीक्ष्य, मान स्व स्मिन् प्रामाण्य च वीक्ष्य दुरगमत्त्वख्यापनमदस्य प्रशमायान्तावेदोऽपि म नुते न बुद्ध तमिति श्रुत्या श्रुतिरूपमानातिरिक्तमानागम्यत्व ख्याप्य

ते । तेन तासां प्रसादाय तत्रैव तत्तदन्तःकरणवृत्तिष्वेवान्तर्धीयत । सर्वप्रत्ययसाक्षित्वेनैवायं तु शक्यता प्राप्त इत्यर्थः । तथाच श्रुतिः । यदि मन्से सुवेदेति दहरमेव न तत्त्वं वेत्थात्मनो रूपं नो न वेदेति वेद च, अविज्ञातं विजानतां विज्ञातमविजानतां, प्रतिबोधविदितं स तमित्यादा। अत्र ब्रह्मणो दुर्बोधत्वं, श्रुत्येकगम्यत्वं, सर्वप्रत्ययसाक्षित्वेन वेद्यत्वं च दर्शितम् ॥ ४८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थ
श्रीपादशिष्यदत्तवंशावतंस–रामकुमारसूनु-
धनपतिसूरिकृतायां श्रीभागवतगूढार्थ
दीपिकाख्यव्याख्यायां दशमस्कन्धे
एकोनत्रिंशोऽध्यायः
॥ २९ ॥ १ ॥



## अथ रासपञ्चाध्यायीव्याख्याया गूढार्थदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥ ( ३० ) ॥

द्वितीये विरहसंतप्तचेतसां गोपयोषिताम् ॥
तन्मयत्वसुखभ्रंशमुखलीला निरूप्यते ॥ १ ॥

अथ भगवदन्तर्धानानन्तरं जातां दशां वर्णयिष्यन्नादौ रसाऽऽसक्तचित्तानां भगवत्सङ्गिनीनाम् अकस्मादिष्टादर्शनजं महान्तं तापमाह ॥

श्रीशुक उवाच ॥

अन्तर्हिते भगवति सहसैव व्रजाङ्गना ॥
अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥

अन्तर्हित इति ॥ भगवति पूर्णाऽखिलैश्वर्यसम्पन्ने परमनिधिभूते सहसैवाकस्मादेवान्तर्हितेऽदर्शनं गते, सहसैव तं भगवन्तमचक्षाणा अपश्यन्त्यः सहसैवातप्यन्त निःसीमसन्तापवत्यो जाताः । रङ्कः सहसैव प्राप्तां सार्वभौमश्रियं सहसैवाचक्षाणो यथा सन्तप्यते तद्वत् । यतो व्रजाङ्गना बालभावमारभ्य तस्मिन्नेवासक्तास्ता इति भावः । यद्वा, अन्तर्हिते अन्तरन्तःकरण एव तासां प्रविश्य स्थिते सति, बहिस्तं भगवन्तमचक्षाणा बहिर्मुखत्वदन्तश्चाचक्षाणा अतप्यन् । यतो व्रजाङ्गना अन्तर्विचाराकुशला इत्यर्थः । न च तासां कामात्मत्वं स्थितम् । कामात्मना दर्शनादिना संतोषोपलम्भात् । अतस्तासां परमप्रेमवतीनां दर्शनस्पर्शनादिकमेव मुख्यमिति द्योतयितुं दृष्टान्तमाह ॥ करिण्यो हस्तिन्यो यूथपं महामत्तगजमचक्षाणा यथा तप्यन्ति तद्वत् । करिणीनां यथा गजदर्शनाद्यभावे क्लेशो भवति तथा नाऽऽसामित्यतस्ता एव दृष्टान्तीकृताः ॥

निवृत्तिपक्षे, अथ विजानतामविज्ञातत्वात्तदपेक्षया अन्तर्हिते भगवति सहसैव त परमात्मानम् अचक्षाणा साक्षात्प्रतिपादयितुमशक्ताः स्वज यद्यत्प्रतिफलितचैत येन विषयीकर्तुमशक्ताश्च व्रजाङ्गना. श्रुतयोऽतप्यन् । तन्मा बभूवुः ॥ १ ॥

तापानन्तर जाता तासा दशामाह ।

गत्यानुरागस्मितविभ्रमेक्षितै-
र्मनोरमालापविहारविभ्रमैः ॥
आक्षिप्तचित्ता प्रमदा रमापते-
स्तास्ता विचेष्टा जगृहुस्तदात्मिका ॥ २ ॥

गत्येति ॥ रमापतेः मेदुरस्य गत्या स्वाभाविकेन नूपुरस्वनयुक्तेन पाद यासेन, अनुराग. स्नेहस्तत्पूर्वक मन्दहसित तत्सहितैर्विलासस्तत्सहितानीक्षितानि कटाक्षास्तै । तथा मनो रमयति, मनसि रमते च य आलापो गुण भाषण वाचिक व्यापारः । विहारा. श्रृङ्गारचेष्टा. । चित्तस्यानवस्थान श्रृङ्गाराद्विभ्रमो मत ॥ इत्युक्तलक्षणो विभ्रमश्च । तैराक्षिप्ता याकृष्टानि चित्तानि यासा ता । अतस्तदात्मिकास्तन्मय्यो, यतश्च प्रमदाः मदृप्तमदयुक्ता, रमापतेर्विविधाश्चेष्टा अगृहुस्तदनुकरणैर्क्रीडनित्यर्थ । अत्रानुरागचित्तस्यानवस्थाने मानसे, आलापो वाचिको, गत्यादयः कायिका । अ यभावानामप्युपलक्षणमेतत् । अत्राभिज्ञापक्षे, रमापतेर्लक्ष्मीपते श्रीविष्णोरन्तरेवाविर्भूतस्वरूपस्य लक्ष्म्या सह विलासरूपा स्वात्मना च सह विलासरूपा याश्चेष्टास्ता जगृहु' । ननु दासीना तासां भगवल्लीलाऽनुकरणमनुचितमित्याशङ्कानिवृत्त्यर्थमुक्त– तदात्मिका'।।त भगवानात्मनि आविर्भूतो यासां ताः । अतस्तापनिवृत्त्यर्थं तल्लीलाग्रहण न विरुद्ध

न इति भावः । किञ्च, प्रमदाः । तथाच प्रमदहेतुकदासीभाव विहाय कान्ताभावस्तथा प्रभुचेष्टानुकरणमपीति भावः ॥ अन भिज्ञापक्षे रमापतेः सर्वैसौ दर्यसम्पत्तिस्वामिनः ॥ मानिनीपक्षे, गतश्चेद् गच्छतु नाम, वयमेव तदीयास्ताश्चेष्टाः कर्तुं शक्ता इति बहिः प्रकटीकर्तुं तास्ताश्चेष्टा जगृहुः । यतस्तदापि प्रकृष्टो मदो यासा ताः । यतश्च, तदात्मिकाः परस्परमतिगाढप्रेमवशादभेदाभिमानवत्यः । अ तस्तस्य गत्यादिभिराक्षिप्तचित्ताः ॥

निवृत्तिपक्षे, श्रोत्रस्य श्रोत्र मनसो मनः वाचो ह वाक् यद्वु प्राणस्य प्राण इत्यादिश्रुत्यचेतनाद्यधिष्ठितैर्गत्यादिभि, परमात्मान प्रत्याकृष्टचित्ता' । यतः प्रकर्षेण मदः परमात्मप्रतिपादने हर्षो यासा ता । रमापतेः सत्तास्फूर्तिलक्षणशोभास्वामिनश्चैतन्यस्यैव तास्ता गमनादिरूपाश्चेष्टा जगृहु । स्वय वाच्यवाचकयोरभेदात् । तदात्मिका' ॥ २ ॥

तदात्मिका इत्युक्त भगवत्स्वरूपपरिग्रहमाह ।

गतिस्मितप्रेक्षणभाषणादिषु
प्रिया प्रियस्य प्रतिरूढमूर्त्तय ॥
असावह त्वित्यबलास्तदात्मिका
न्यवेदिषु कृष्णविहारविभ्रमा ॥ ३ ॥

गतीति ॥ प्रियस्य गत्यादिषु प्रतिरूढा मूर्तिर्यासाम् । भगवद्धर्मान्स्वात्मन्येवारोपितवत्यः । यतः प्रियाः । तथापि मनसा प्रतिरूढमूर्तयो, न तु नटवत् तत्तद्वेषादिक धृतवत्यो, यतोऽबलास्ताद्दक्षबलरहिता' । अतस्तदावेशवशात् तासां तथात्वमित्याह ॥ तदात्मिकास्तत, कृष्णविहारविभ्रमाः ॥ कृष्णस्येव विभ्रमाः क्रीडा वि-

लापा यासा ताः । असौ योऽन्विष्यतेऽसावहमिति परस्पर निवे- दितवत्य । न तु वय व्रजस्त्रिय इति मनागपि काश्चिदपि जानन्ति स्मेत्यर्थ. । कृष्णविहारैः स्मर्यमाणैर्विभ्रम उ मादो यासामिति वा । लीलाख्यानुभावोऽयम् । समानमिद पद्यमितरपक्षयोरपि ॥

निवृत्तिपक्षे, गत्यादिषु देहेन्द्रियव्यापारेषु या. प्रियास्तत्त दाकारवृत्तयस्ता प्रियस्यात्मनः प्रतिरूढा आत्मन्यारूढा मूर्तयो यासा ताः । अत एवास्य वासुदेवस्य विभोश्चिदात्मन एव तत्त विषयप्रकाशनसामर्थ्य यासाम् । किञ्च, तस्मिन्नारोपितत्वात् तदा- त्मिकाः, तत्सत्तातिरिक्तसत्ताविधुरा इति । कृष्णस्य सदानन्द स्वरूपस्य परब्रह्मणः सत्तास्फूर्तिप्रदात्वादिलक्षणविहारे, तद्गुणने विभ्रमो यासा ताः श्रुतयो न्यवेदिषु' बोधयामासु । तथा अ- सौ परमात्माऽहमेवेति न्यवेदिषुरित्यर्थः । तथाच श्रुतयः । यद्वाचा- ऽनभ्युदित येन वागभ्युद्यते, यन्मनसा न मनुते येनाहुर्मनो मत, यच्चक्षुषा न पश्यति येन चक्षुरपि पश्यति अह ब्रह्मास्मि, योऽसा- वादित्ये पुरुष. सोऽसावहमित्याद्याः ॥ ३ ॥

एव तन्मयता प्राप्ताना लीलामुपवर्ण्य पुनः प्राप्तस्वशरीरा- ऽनुसन्धानाना चेष्टामाह ॥

गायन्त्य उच्चैरमुमेव सहता
विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥
पप्रच्छुराकाशवदन्तर बहि-
र्भूतेषु सन्त पुरुष वनस्पतीन् ॥ ४ ॥

गायन्त्य इति ॥ अहो येन वय रमिताः स प्रेष्ठ इदानी क ग- त इति विचिन्त्य सहता मिलिताः प्रथम प्रेष्ठमेव गायन्त्य एव । य

था वय तदीयकलगीतमाकर्ण्य झटिति तत्समीपमागतास्तथास्मद्वी तमाकर्ण्य सोऽप्यास्माकसमीपमागतः स्यादिति आशयेन तथा जाताः । ततोऽनागते मेष्ठे उ मत्तकवत् वनाद्वन विचिक्युः । अस्मिन् वने मेष्ठ' स्यादित्याशयात् तत्र वने प्रतिवृक्षादिकम वेषण कृतवत्यः । अन्वेषणेनाप्यलब्ध प्रेष्ठ वनस्पतीन् उ मत्तकवत् पप्रच्छुः । सर्वत्र पूर्णत्वात् तद्व्यतिरिक्तस्य सर्वस्याप्यनिरूपणाच्च तदन्वेषणस्याभा यो, परमोन्मत्तचेष्टितत्वमित्यभिमायेणोन्मत्तकवदित्युक्तम् । भया तिशयस्रोतनाद् वा । आकाशवद् भूतेष्वन्तर्बहि' स'तम् । अत एव पुरुष पूर्ण सर्वात्मानम वेषणाद्ययोग्यमित्यर्थ ॥

निर्गुणपक्षे, आकाशवद सर्वगतश्च नित्य , स त्य ज्ञानमनन्त ब्रह्मेत्येवमुमेवाकाशवदन्तर्बहिश्च भूतेषु सन्त पुरुष गायन्त्य , सोऽन्वेष्टव्य इति त विचिक्युस्तस्या वेषण प्रतिपादयामासुः । त था, गुहाहित गह्वरेष्ठ पुराणम इत्यन्तःकरणलक्षण वा वन वनस्थितम् ॥ उ मत्तकवदिति ॥ सुखरूपात्माविशिष्टम त'करण वन त स्माद् वनाद्वन तद्वृत्तिविशिष्टादितरवृत्तिविशिष्ट, तथात्मा विजिज्ञा सितव्य इति प्रश्नपूर्वक विचार, वनस्पतीन् अ त'करणवनस्पतीन् सत्त्वगुणादीननुदिश्य बोधयामासुरित्यर्थ. ॥ ४ ॥

तत्कृतप्रश्नान् प्रपञ्चयति ॥

दृष्टो व कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मन ॥
नन्दसूनुर्गतोहृत्वा प्रेमहासावलोकनै ॥ ५ ॥

दृष्ट इति ॥ तत्रादौ विष्णुप्रजापतिरुद्रावतारभूता एते अश्वत्थादयोऽस्य पश्येयुरत एते मष्टव्या इत्याशयेनाश्वत्थादीन् पृच्छन्ति ॥ हे अश्वत्थ, हे प्लक्ष, हे न्यग्रोध, वो युष्माभि कच्चित् किं न दमूनुर्दृष्टः । नन्देन परमभक्तेन ज मान्तरे आराध्य पुत्रत्वेन

लब्ध' । अस्मदनुग्रहाय वा तत्पुत्रत्वेन प्रकटित. । अत एव नो-
ऽस्माक मन प्रेमहासावलोकनैर्हृत्वा गत.=अन्तर्हित. । यद्यपि स
सर्वत्र व्याप्तस्तथापि नन्दसूनुत्वेनास्माक प्रेष्ठोऽतस्तद्भूयोऽन्विष्य
त । युष्माभिर्दृष्टश्चेत् तर्हि करुणया वक्तव्य । त लब्ध्वा सुखिन्यः
स्याम इति भावः । यद्वा, ननु विष्णु. कथ चौर्य कृतवानित्या
शङ्कानिरासाय नन्दसूनुरित्युक्तम् । तथाच यथा दधिदुग्धादि
चोरितवाँस्तथा मनोऽपीति भाव । ततस्तेभ्य उत्तरमलब्ध्वा
अहो, अलक्ष्मीसस्थानभूत., पशुना दषा. स्वर्गलोकमायन्, तस्य
शिरश्छित्त्वा मेदः प्रक्षारयन् स प्लक्षोऽभवादिति श्रुतेरयमपि प्लक्षो,
लोकानामज्ञानहेतुरेव, नितरामग्राण्यधोभूतानि यस्येत्यधोदृष्टि-र्यग्रो
ध । अत एते न वदिष्य तीति विचार्यान्यत्र गता ॥ अनभिज्ञा
पक्षे, अत्युच्चतरत्वादेते दूरतरचरमप्यस्मत्प्रेष्ठमङ्गस्य पश्येयुरिति सम्भा
व्य पृच्छन्ति ॥ दृष्ट इति ॥ किमर्थ पृच्छ्यत इति चेत् तत्राहु' ॥
नन्दस्य साधोः सूनुर्नोऽस्माक स्त्रीजनाना प्रेम्णा सर्वलोकमोहनौ
षधिविशेषेण साहतैर्हासावलोकनैभृत्ये श्चौर्यकर्मकुशलैर्विहृतनेत्रा
दिद्वाराऽ ॥ करणलक्षणान्त. प्रविष्टु समर्थमनोरत्नमञ्जूषा चोर
यित्वा पलायितोऽतस्त पृच्छाम इत्यर्थ' । तत उत्तरमलब्ध्वा, मह-

रिति विचार्यान्यत्र गता ॥ मानिनीपक्षे, एत सर्वलोकपूज्याः
प्रष्टव्या इत्याशयेन पृच्छन्ति ॥ दृष्ट इति ॥ दृष्टश्चेद् वक्तव्य' । य
तो नो मनो हृत्वा, न त्वस्माभिस्तस्य मनो दत्तमिति भाव । ननु
भवदन्त स्थ मनो बलात् कथ हृतवानितिचेत् तत्राहु ॥ प्रेमेति ॥
स्वागतमित्यादिवचनैराविष्कृतेन प्रेम्णाऽ त प्रवेशो, हासेन ग्रहण
मवलोकनेन हरणम् । ननु तदुपरि भवतीभिर्विश्वास किमर्थ कृत
इतिचेत् तत्राहु ॥ न दस्य सर्वान दमदस्य परमविश्वसनीयस्य

सूनुरतोऽस्मभ्यं सुखमेव दास्यतीति मत्वा विश्वासः कृत इति भावः । ततोऽलब्धोत्तरा क्षणं स्थित्वा, अहो किमेताभिरित्यस्मानवजानन् तस्तब्धाः प्रत्युत्तरं न ददते तदलमेतैः क्षुद्राभक्ष्यफलैरप्रफुल्लैः । न यत्स्थिर तिष्ठति । न्यग्रोधो रुणद्धि । रुधिर् आवरणे । प्लक्षत्यधो गच्छतीत्यर्थः । तस्मात् प्रष्टुमयोग्यैश्च बहिरत्यन्तकठोरैः, परोपकारमाहात्म्यानभिज्ञैर्भूतावासयोग्यैरिति विचार्य्यान्यत्र गताः ॥

निवृत्तिपक्षे, गुणा न विदुरात्मानमित्युक्तत्वाद् गुणाद्यभास्यतामाविष्कुर्वन्ति ॥ दृष्ट इत्यादिना ॥ अश्वत्थादिपदैः सत्त्वरजस्तमोऽभिधा गुणा गृह्यन्ते । नोऽस्माकं प्रेम प्रसन्नतापूर्वकम्, अवलोकनैः श्रवणादिरूपैर्मनो हार्दं हृत्वा उद्धृत्य, नन्दः = आनन्दश्चासौ सूनुः=अर्कश्च । आनन्दस्वयम्प्रकाशरूपः परमात्मा गतोऽवगतः स युष्माभिर्दृष्टः कच्चित् । भवद्भिरप्रकाश्य इति भावः । सूनुः पुत्रेऽनुजेऽर्के नेति मेदिनी ॥ ५ ॥

अथ कुरबकादीन् दृष्ट्वा एते महान्तः पुण्यवन्तः सगन्धा मधुपैरऽतिथिभिरनिशं सेव्यमानाः शुद्धान्तःकरणाः कथयिष्यन्तीति मत्वा पृच्छन्ति ।

कच्चित् कुरबकाऽशोकनागपुन्नागचम्पकाः ॥
रामानुजो मानिनीनां गतो दर्पहरस्मितः ॥ ६ ॥

कच्चिदिति ॥ कुरबकः शोणाऽम्लानः । नागो नागकेसरः । हे कुरबकादयः ! रामानुजः कच्चिदितो गतः । अनेन मार्गेण गच्छन् दूरतोऽपि दृष्टः स्यादिति भावः । रामावतारे कृतायाः सेवायाः फलप्रदानायास्मिन्नवतारे स्वीयं नाम, ज्येष्ठत्वं च लक्ष्मणाय दत्तवान् । स भक्ता अस्मांस्त्यक्तुमयोग्यास्त्यक्त्वा गतोऽतः पृच्छामः । तस्माद् दृष्टश्चेत् कृपया वदतेति रामानुजपदाशयः । करुणा

सागरोऽपि भगवान् कठोरचित्तक्षत्रियजात्युत्पन्नत्वात् स्वभाव मनुकुर्वन्नस्मत्प्राणहरचेष्टो जात इति वा तदाशय । यद्यपि तेन र मितानामस्माक मान उत्पन्नस्तथापि तन्निगपार्थम तर्जीन नोचि तम् । यतो दर्पहर स्मित यस्य स. । तथाच मिष्टौषधप्रदानेन रोगनिवृत्तिसम्भवे विषप्रदान नोचितम् । अक्ष च ग्धु रि देन कि मर्थ पर्येत नजेदिति यायात् । अतस्तद याय निचार्य वक्तव्य इति भावः । तेभ्योऽलब्धोत्तरास्तद्वैनाकस्मिकेन वायुना चालि तानप्राखाखास्तानालक्ष्य, अहो शिरोधूननेन, त्य न जानीम इति सु- चयन्त्यतोऽलमेभि सम्पद्गर्वितैरिति मनसि निधायाऽन्यत्र याता ॥ अनभिज्ञापक्षे, अहो किमर्थ गत इति चेद् त्वैव गत इत्याशयेना हु ॥ रामानुज. ॥ तथाच, बलभद्रानुजस्य तस्य नास्ति भय सभावना अतो भयनिमित्तक तद्गमन न सम्भवति । नाऽप्यस्म न्मानिरासार्थम । तस्य स्मितमात्रेणैव सुकरत्वादित्याहुः ॥ दर्प्पे ति ॥ तथाच स्मितादिस्मृतिमात्रेण हृतमानास्तद्वियोगे क्षणमपि जीवितुमशक्ता अन्वेषयाम पृच्छामश्च । अत कृपया वदतेति भाव. । तेभ्योऽप्यलब्धोत्तरा , अहो अय कुरवक । अतिमकर द त्वाद् अलीना कुत्सित ईषद्वा रवो यत्र स. । यद्वा कुत्सिताद्रोदन शब्दात् क सुख यस्य स रोदनप्रिय. । अशोक. शोकरहित. । पी डानभिज्ञत्वाद् दयावर्जितः । नागोऽय नाम्नैव भयानक । अय तु पुसामपि नाग. । चम्पकोऽपि परिणामविरसस्तस्मादेते न मेष्ट- कथनेनास्मान् सुखयिष्यन्तीति विचार्याऽन्यत्र गता ॥ मानिनीपक्षे, कुरवकाशोकौ कामोद्दीपकौ । नागादय कामबाणपुष्पा कामिन ध्यावर्तयन्त्यत कामिन त पश्चाऽप्येते ह्रास्यन्तीति मत्वा तान् पृच्छन्ति ॥ कच्चिद् गत , किं वा कचिदत्रैव निलीय वर्तते । ननु किमर्थमन्विष्यत इत्यतआह्वाऽस्मत्सर्वस्वमपहृत्य पलायित इत्याह ॥

मानिनीनां मानैकधनानामस्माकं स्मितादिना दर्पं हृतवान्, निधनाश्चास्मान् कृत्वा गताऽतो धूर्तशिरोमणिरस्माभिर्द्रष्टव्य इति भावः । ननु अबलाभिर्युष्माभिः कथं धर्तुं शक्य इतिचेत् तत्राह ॥ रामानुज ॥ तस्य ज्येष्ठो भ्राता बलरामोऽप्यस्मदपेक्षया न प्रगल्भस्तस्यायमनुजः कथं प्रबलः स्यात्। अतो यथा पलायनं न कुर्यादिति भावः। ततोऽलब्धप्रतिवचना अहो एते पुरुषजातित्वेन कठोरचित्ताः कृष्णपक्षपातिनो न कथयिष्यन्तीति मत्वाऽन्यत्र गता ॥

निवृत्तिपक्षे, कुरवकादिशब्दैः कुरवकादिस्थानीयानामाकाशादीनां स्थूलसूक्ष्मभूतानां ग्रहणम् । रामा महामाया अनुजा भगिनी यस्य स सर्वकार्योपादानमायाधिष्ठानभूतः कश्चिद् युष्माभिर्दृष्टोऽभगवान् । स त्वऽस्माकं मानिनीनां तत्र प्रामाण्यवतीनामपि दर्पहरः स्मितं तत्स्थानीयं चराचरात्मकं जगद् यस्य सः । अस्माकमपि सत्त्वासत्त्वाभ्यां वक्तुमशक्यत्वात् । तथाच महाभूतेभ्योऽपि पर इति भावः ॥ ६ ॥

अथा यत्र गत्वा तुलसीं ददृशुस्तत्, इयं भगवतोऽतिप्रिया सदैव तन्निकटवर्तिनी स्यात् तज्ज्ञानवती, भगवदीयतया दयावती वक्ष्यति चेति मत्वा तुलसीसन्निधौ गत्वा तां पृच्छति ।

कच्चित् तुलसि कल्याणि गोविन्दचरणप्रिये ॥
सह त्वाऽऽलिकुलैर्बिभ्रद् दृष्टस्तेऽतिप्रियोऽच्युतः॥७॥

हे तुलसि त्वया अच्युतो भगवान् कच्चिद् दृष्टः । यतस्त्वं कल्याणी भगवत्प्राप्तिसाधनपुण्यपुञ्जानुष्ठानवती । अत एव गोविन्दचरणौ प्रियौ यस्याः सा, तच्चरणयोः प्रियेति वा । अत एव तवाऽतिप्रियः । अत एवाऽच्युतः । त्वया कदाऽपि न वियुक्तः । अत एव त्वामलिकुलैर्भ्रमरसमूहैः सह विक्षेपमप्यगणय्य बिभ्रद्

धारयन् वर्त्तते । यत्रप्यऽस्माकमस्यतिप्रियस्तथापि नास्माकं ता-दृश कल्याण येन कामोपाधि विना तच्चरणविवातिप्रियौ भवेताम्। अतो नास्माकमच्युत, किं तु पलाग्यास्मत्तकाशाद् मत । सर्वस्यापि कल्याणकरी त्वमिति वा। अतो दृष्टश्चेत्तर्हि कथयेति भाव । तस्या अप्रात्युत्तरा, अहो भगवदीयेयं भगवदाज्ञा विना न कथयिष्यतीति मत्वाऽन्यत्र गता. ॥ अनभिज्ञापक्षे, हे तुलसि हे कल्याणि दर्शनभगवच्चरणार्पणादिना सर्वलोककल्याणवदे यतो गोविन्दस्य महाविष्णोश्चरणयोः प्रिये । अत एव नारायणसदृशादस्मत्कमतिप्रियोऽप्यच्युत , अलिकुलैः सह त्वा बिभ्रद् त्वया दृष्ट कच्चिद । त्वत्तुल्य धर्मीसा मधुव्रता अपि तेन न निवार्यन्ते, वय तु तादृशसुगन्धराहत्येन त्यक्ता. किं कुर्मः । तस्मादस्मज्जीवनाय त कथयेति भाव. । अहो विष्णुपूजागर्विता आरासक्तमानसा अकलत्वपीरस्मान् न भूत इति मत्वाऽन्यत्र याता. ॥ मानिनीपक्षे हे तुलसि, हेकल्याणि, परमकल्याणवति, यतो, गोविन्दचरणप्रिये चरणेत्यादरव्यञ्जकम् । गुरुचरणेत्युक्तमितिवत । हे गोविन्दस्य प्रियेइत्यर्थ । यतोऽलिकुले सह त्वा त्वात विभ्रत् । अहो त्वदीय भाग्यम् । यतोऽतिका ता प्रिया अस्मादृश्यो येन स त्वा सर्वदा बिभ्रदास्ते । अत एव त्वत्तोऽप्यच्युतस्तस्माद् दृष्टश्चेद्वश्य कथयेति भाव । अहो, इय ततो लब्धादरा जाताऽत्यर्गवा न कथयेदिति मत्वाऽन्यत्र गतवता ॥

निद्दर्शपक्षे, अथ ज्ञानेन्द्रियपञ्चकमध्ये मुख्यत्वाच्चक्षुरिन्द्रिय पृच्छन्ति । हे तुलसि, तत्स्थानाये चक्षुरिन्द्रिय, कल्याणि कल्याणस्य साधनभूते, गोविन्दस्यैन्द्रियकनुखमोक्षणश्रवण तत्तद्रूपस्य प्रति, त्रिचरण यैरिन्द्रियैस्तेषु मध्य प्रिये अलिकुलस्तद्दृष्टचिह्नपत्नर-खीमधुरात्रै सह त्वा बिभ्रद् प्रियो, यतो वरतु । स्वरूपत्र, क

दाचिदपि न प्रच्युतः स ते त्वया दृष्टः कच्चित् ॥ ७ ॥

अहो एताः साधारण्यः स्त्रिय एवास्माकमुपकारं करिष्यन्तीति मत्वा मालत्यादिकाः पृच्छन्ति ॥

मालत्यदर्शि वः कच्चिन्मल्लिके जाति यूथिके ॥
प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः ॥ ८ ॥

मालतीति ॥ हे मालति, हे मल्लिके, हे जाति, हे यूथिके । मा लक्ष्मीं लतति वेष्टयतीति मालती । मलते सुगन्धादिकं धारयतीति मल्लिका । जायते इति जाती, सुखजनकत्वात् सफलजन्मवती । यूथमस्त्यस्या असौ यूथिका । एवम्भूता अवर्षसञ्ज्ञाः । यूयं चतस्रो लता अतिशुभ्रपुष्पा भगवत्प्रिया, अतो भवतीर्वयं पृच्छामः । वो युष्माभिः कच्चिद् दृष्टः । न दृष्ट इति न वक्तव्यम् । यतो वो युष्माकं हस्तकमलस्पर्शेन प्रीतिमुत्पादयन् यातः । करस्पर्शजं यस्यात्यन्तविकासस्य दर्शनात् । ननु तस्यास्मत्स्पर्शने किं प्रयोजनमिति चेत् तत्राह ॥ माधव ॥ लक्ष्मीपतेः सर्वदा तत्साहित्यस्य तदलङ्काराय पुष्पावचय आवश्यक इति भावः । अहो एताः अस्मा' फलरहिता लक्ष्मीश्यामानि यो न कथयिष्यन्तीति मत्वाऽन्यत्र गताः । मालतीजात्योरवान्तरभेदा यूथिका, जुहीति ख्याता ॥ अनभिज्ञापक्षे, अहो सौभाग्यातिरेकवत्यो नम्रस्वभावाः सर्वसुखकरा विकसितवदना परोपकारिण्यो भविष्यन्तीति मत्वा मालत्यादिकाः पृच्छन्ति ॥ मालतीति ॥ हे मालत्यादयः, कच्चिद् वोऽदर्शि, भवतीनां न केवलं दर्शनमात्रमपि तु स्पर्शोऽपि जात इत्यनुमीयत इत्याहु ॥प्रीतिमिति॥ यतो माधवः परमशोभापीशत्वात् स्पर्शेनापि शोभाजनकः। स्पर्शश्च पुष्पप्रियत्वात्तस्यावश्यमेव जातः स्यात् । माधवो वसन्त इवेति श्लेषेण तद्विगमो भवतीनामप्यस

ह्वोऽतस्तुल्यदुःखत्वादवश्य वदतेति भाव । अहो एता कर स्पर्शेन निवारण कृत्वा गत स्यादतस्तद्वयाच्च कथय तीति म त्वाऽत्र याता ॥ मानिनीपक्षे, अहो इमा मालत्यादय सौभा ग्यादिगुणैरस्मृतमाना अत एता मद्वृथ्या इत्याशयेन पृच्छन्ति ॥ मालतीति ॥ यतो भवत्यः पुष्पिण्योऽत करस्पर्शन म. प्रीति जन यन् यात इति सनर्मेर्ष्या व्यञ्जयन्ति । पर त्वेतावता भवती स्त्रियों न विषयो, यत स न कस्या अपि पति , कि तु माया शोभामात्रस्य धव. स्वामी । तस्मादस्मत्पक्षपाति यो यूयमवश्य क- थयतेति भाव. । अहो सद्य स्पर्शोत्थाऽखर्वगर्वत्य एता न ब्रुव त इति मत्वाऽ यत्र प्रस्थिता. ॥

निवृत्तिपक्षे, मालत्यादिस्थानीयानि यानि श्रोत्रत्वग्रसन घ्राणाख्यानीन्द्रियाणि पृच्छन्ति ॥ मालतीति ॥ व प्रीति विषयो पलब्धिसुख तत्प्रकाशेन जनयन् यात । प्रतीत्या विषय व्याप्य स्थित. । ननु व्यापकस्य तस्य कथ गमनमितिचेद् तत्राहु ॥ माधव ॥ माया प्रमादेत्येर्थः स्वामी । तथाच प्रमाणचैतन्यस्य गमनादिकमिति भाव ॥ ८ ॥

अहो एते आम्रादय परोपकारशीलास्तपस्विनस्तीर्थसेवा पराश्चेति मत्वा तान् पृच्छन्ति ॥

चूतप्रियालपनसासनकोविदार-
जम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपा ॥
येऽन्ये परार्थभवका यमुनोपकूला
शसन्तु कृष्णपदवी रहितात्मना न ॥ ९ ॥

चूतेति ॥ चूताम्रयोर्मधुराऽम्लफलत्वेन भेद. । नीपो धूलि

कदम्बो बृहत्पुष्पः। कदम्ब क्षुद्रपुष्पो तिमुग धः। पियालः शालभेद। पनस. कठहर इति ख्यातो बृहत्फल.। असन पीतशा लः। कोविदार. काचनारभेद। अर्क क्षुद्रवृक्षोऽपि गोपेश्वर प्रियत्वात् प्रश्नार्हे। च्योतति रसमिति चूत। च्युतिर् क्षरणे। प्रीणातीति पियाल। प्रीञ् तर्पणे। पनाय्यते स्तूयत इति पनस। अस्यति परदुःखमिति असन। असु क्षेपणे। कु भूमिं विदारयतीति कोविदार। दृ विदारणे। परोपकारार्थं झटिति भूमिं भित्त्वा निःसृत। जमति परदुःखमिति जम्बूः। जमु अदने। अर्कः भानुवज्जाड्यहर.। बिलति परदुःखमिति बिल्व। बिल भेदने। वङ्कते अवगच्छति परदुःखमिति वकुलः। वकि गत्यर्थे। अम्यते खलु खनिरासार्थं जनैरित्याम्र। अम गत्यादौ। कपति हिनस्ति परदुःखमिति कदम्ब। नयति सुख प्रापयतीति नीपः। णीञ् प्रापणे। एवम्भूता हे चूतादय। अ ये च ये मधूकादय. परार्थभवकाः परार्थमेव भवो जन्म येषा ते। भविका इति पाठे भविक मङ्गलम्। फलाद्युत्कर्षेऽपीत्यर्थः। तत्रापि, यमुनोपकूला.॥ यमुनायाः कूलसमीपे वर्तमानाः। तीर्थनिकटवर्तित्वात् सत्यवादिन। नोऽस्मभ्य कृष्णस्य सदान दरूपस्य भगवत प दवी मार्ग शसन्तु कथय तु स्वस्य करुणापात्रतामाविष्कुर्वन्तु इ ति॥ रहितात्मनाम्॥ काश्चिन्मूहादिरहिता। अनवच्छसन्त। तत्रापि मृषा भाषण न विधेयम्। यतो, यमुनोपकूलाः। यमुनासन्नि धौ वर्तमाना इति शपथो व्यज्यते। शमनेनात्मप्रदान कुरुतेति भा- वः। अत्र दशन सिद्धान्तकृत्य मार्ग पृच्छन्ति। अहो एते समाधि निष्ठा न शृण्वन्त्यतो न किञ्चिदपि वदन्तीति निवृत्ताः॥ अन भिज्ञापक्षे, कृष्णस्यास्माच्चत्वरमञ्जुमामाकृष्य गतस्य चोरचक्र वर्तिनः पदवी शसन्तु। व्यञ्जयन्त। नन्व स्वयमेवान्विष्य तस्य

मार्गो निश्चेतव्य इत्याशङ्क्याहु ॥ रहितात्मनाम् ॥ विरहव्याकुल तयाऽवेषणसमर्थसमाहितमनोरहितानाम् । कृपया भवन्त एव व दन्तु ॥ अहो एत तीर्थवासिनोऽतोऽस्य वक्तोरहृदयाः, अतो न कथयिष्य तीति तनो निरस्ता ॥ मानिनीपक्षेऽप्येवम् ॥

निवृत्तिपक्षे चूतादिस्थानीयानि पञ्चकर्मेन्द्रियाणि, जम्ब्वादि स्थानीयान् पञ्चप्राणान्, कदम्बनीपौ चित्ताऽहङ्कारौ पृच्छति ॥ चूतेति ॥ ये चाऽये विषया परार्थैकका आत्मशेषभूता यमुनास्था नीयमायाप्रदशस्थिता । नोऽस्मासि श्रुतिभी रहितात्मनामस्मद् विचारविधुरचित्तानाम् । कृष्णस्य परमात्मन पदवीं मार्गं वास तु स्वप्रकाशकस्य प्राप्त्युपाय सूचय तु । तथाच तदनुमापका भ व तो, न तु तदवभासका इति भावः ॥ ९ ॥

परमतिवहलमानसा' प्राप्तास्य तदे'या मार्गकथनप्रार्थनयोग्य मार्गस्मरणाद् भूमीनिहितदृष्टयस्तस्याः सर्वत्र सत्त्वनावश्य तद्दर्शन सम्भाव्याहु ।

> किं ते कृत क्षिति तपो बत केशवाङ्घ्रि-
> स्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ॥
> अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा
> आहो वराहवपुष परिरम्भणेन ॥ १० ॥

किमिति ॥ हे क्षिति, ते त्वया किं कीदृशनामधेयं तपः कृ तम् । यत्प्यस्माभिरपि तप कृतमेव, तथापि तादृशफलानुकूल न कृतमतो महान् खेद इत्याशयेनाहु' ॥ बतेति ॥ यतो या त्व केशवस्याङ्घ्रिस्पर्शोत्सवो यस्या सा । कश्च अश्च ईशश्च केशाः ब्रह्मविष्णुशिवास्तेऽस्य वशयतया स तीति केशव । केशाश्चिया

मकृतया याति गच्छतीति वा । तथाच तादृशस्य परमात्मनोऽङ्घ्रिस्पर्शोत्सवो, नाल्पस्य तपसः फलमिति भावः । एतज्ज्ञापकं चिह्नमाहुः ॥ अङ्गरुहैरुत्पुलकिता विभासि विशेषेण शोभसे । तत्र विशेषं पृच्छन्ति ॥ अपि सम्भावनायाम् । किमयमुत्सवोऽङ्घ्रिसम्भवः । सम्प्रति तवैकदेशे चरणस्पर्शसम्भूतः । यद्वा नैतावद्, किं तु पूर्वमेवोरुक्रमस्य त्रिविक्रमस्य वामनस्य पदा सर्वाक्रमणादधुना भगवच्चरणस्पर्शेनासम तात् । अथवा, नैतावदेवाऽपि तु ततोऽपि पूर्वं वराहस्य वपुषा परिरम्भणेनालिङ्गनेनेदानीमङ्घ्रिस्पर्शोत्सवः । तथाचास्मत्साजात्यं भवत्या अप्यलस्त पश्यन्ती त्वं दर्शयेति भावः ॥ अनभिज्ञापक्षे, अहो किमथ तीर्थवासिनोऽपी निन्यते, यस्तमवश्यं जानाति स प्रष्टव्य इत्युक्तवतीनां मध्ये काचित् क्षितिं सूचयामास, ततः सर्वास्तामाहुः ॥ किमिति ॥ हे क्षिति, त्वया किं तपः कृतम् । पुलकितैरङ्गरुहैरङ्कुरैः केशवस्याभिरूपाः केशा यस्य तस्य परमसुन्दरस्य कृष्णस्यास्याङ्घ्रिस्पर्शोत्सवा विभासि । तात्पर्योत्सवजनके तपसि पृष्टे, अदत्तोत्तरां तामुपलक्ष्य स्वयमेवोत्प्रेक्षन्त्योऽपि अयमङ्घ्रिसम्भव उत्सवः उरुक्रमविक्रमजनितपीडारूपतपसो वा, आहोस्वि महावराहवपुषः परिरम्भणजनितव्यथारूपेण तपसा । यद्वा, तच्चरणस्पर्शजनितपुण्याद्वा । किं वा तत्परिरम्भणजनितपुण्येन । तथाच तत्पादस्पर्शादिरहितत्वाद् दुर्भगानामस्माकं, तत्पादस्पर्शमनुभवन्ती सुभगा त्वं करुणया तं सन्दर्शयेति भावः ॥ मानिनीपक्षेऽप्येवम् ॥

निवृत्तिपक्षे, अथ क्षितिस्थानीयं मनः पृच्छन्ति ॥ किमिति ॥ हे क्षिते, त्वया किं तपः=आलोचनं कृतम् । विचारस्वरूपमाविष्कुर्विति । केशान् ब्रह्मविष्णुरुद्रान् वष्टि इच्छति स्रष्टृत्वाद्यऽयमिति केशवः परमात्मा । तस्याङ्घ्रिरंश इवांशो जीवात्मा । सर्वे

वांशो जीवलोके जीवभूतः सनातनः' इत्युक्तत्वात् । तस्य स्प र्शनोत्सवो यस्याः सा पुलकितर्हीपतैरङ्गरुहै सङ्कल्पविकल्पात्म वृत्तिभिर्विभासि । स उत्सव किं यथोक्ताद्दिव्यस्पर्शसम्भवः । यद्वा उरुक्रमस्यान्तर्यामिणो विक्रमात् मेरणारूपपराक्रमात् । आहोस्विद् वराहस्य वपुषश्वेतनस्वरूपस्य परिरम्भणेनेति ॥ १० ॥

एवं व्याकुलमानसा अकस्मादु हरिणी दृष्ट्वा तामेव पृच्छन्ति ॥

अप्येणपत्न्युपगतः प्रिययेह गात्रै-
स्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः॥
कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः
कुन्दस्रजः कुलपतेरिह वाति गन्धः ॥ ११ ॥

अपीति ॥ हे कृष्णसारपत्नि, अत एव, हे सखि, तत्पतित्वेन समनेत्रत्वेन भीरुत्वादिधर्मसाधर्म्येण भवत्या अस्मत्सखित्वम् । अतो नो युष्माकम् अपि किम् उपगतो मिलितः । इहास्मिन् वने मियया सह गच्छन् सु दर्शनीयगात्रहादिभिः स्वगात्रैर्भवतीनां दृशां सुन सुनिर्वृतिपरमसुखं तन्वन् विस्तारयन् । यतोऽच्युतः परमात्मा सर्वप्राणिनो नेत्रादेः परमानन्दजनक एवेति भावः । ननु प्रियासाहित्य क थमवगतमित्याशङ्क्याहुः ॥ कान्तेति ॥ कान्ताया अङ्गेन कुङ्कुम रञ्जितायाः कुलपतेर्गोपीसमुदायस्वामिन स्रजो मालाया गन्ध इह वाति आगच्छति । तथाऽनुभूयत इत्यभिप्रायमिति प्रियासाहित्य निश्ची यत इति भावः । अत्रैणपत्नीत्यनेन, पत्युर्नो यज्ञसंयोगे इति स्मर णादेणानां ज प्रा नरे याज्ञिकत्वसूचनेन तत्पत्नीनां यज्ञपत्नीत्व सूचितमिति ह्य तामा । उपगत इति तज्ञाग्यमशासा । दृशामि त्यादिना वनेत्रणमामा । अच्युत इति परमानन्दप्राप्तियोग्यता । कान्तेत्यादिना श्यमतमा । कुन्दस्य शुभ्रतया कुङ्कुमशोभायोग्यता ।

इति स्वानस्य गर्मनै॰ा॰ उम। मानीति तत।नर्गतत्प्रशोति व्यञ्जमाता ॥ अनभिप्रायपक्षे अहो पुरःकृतायभावात् मिय चरणसरोजैगनसमाप्तमन्तर्गतं ग्रती क्षितिरिय न दधात, यद्वा म स्युत्तर दातुमप्यर्थो जडा न प्रष्टव्यो, किन्तु चेतन काश्चित् प्र ष्टव्य इति चिन्तय न्त्योऽकस्मात् काश्चिद्धरिणी दृष्ट्वाहु ॥ हे सखि एणपत्नि, अच्युत कि त्वयापगत समाप्त । तत दृष्टिगोचर ए व सम्प्रति कचिद्गतो, न तु त्वत्ता वियुक्त इति सूचयितुम् अच्युत इत्युक्तम् । तत्र हेतुम् ॥ नियपेति ॥ तत्र स्वभावादग्रे प्र चलिता तामवलोक्याहा इय– दृष्ट इति कि ब्रवीमि, न वदाया न्यत्, मत्पृष्ठत आगम्यतामिति सूचय त्यग्रतो गच्छ नी ग्रीवा प रावर्त्य मुहुरस्मान् पश्यति । तत एषैवात्र निर्देष्टं न दातुं दया वतीति तामनुगच्छ त्यो दूरात् कापि गता तामदृष्ट्वा परस्पर पृच्छ न्त्य स्माऽस्मो सम्प्रति हरिणी न दृश्यते क गतेति । तत काचि दह्यदिन्दैव कृष्णो गतो । सा त नद्यात् दूषकरत्वोपपलापा र्थं कचित् तिरोहितेति श्रुत्वा तत्र स्थिता, देवाङ्गनामोरभ्यमा द्गत्वागेऽनन्य मन्यवदूक्तमव तदत्रामति महर्थ पुरताद्धु ॥ कान्ते ति ॥ गोपीकुलरमणस्य तस्य गोपीतनुद्रव विहायैकस्य कयाचि त् का तया रममाणस्यास्याय पश्यतेति कुलपतिपदाशय, ॥ मानतीपक्ष, भगवान् राधया सह तोहत इति पूर्वं स्वप्नमनुक्तमर्थ मपश्रीनायुक्तम मे व्यञ्जयति तस्या सौभाग्यातरक प्रीतमितु म् । तत्र क्षितेरस्य ऽक्षासग अहो सर्वदास्यभावार्थोपपरायणस्या ऽस्मान् विहायैकाकिनो गमन कथ जानामीति विचारपराणा म ये काचित् रोचन । मत्प्रेमन कगाताद् तुलया नीत स्यान्विति । त- तश्च एदिदाना एर पयद त्वन्नाम्न गन्धमाघ्राय कयाचन्नीत इ अनुमाय देवदागना ङ्गामैनामलोक्याऽहो इय ओममेनादिमती

ज्ञास्यतीति मत्वा ता पृच्छन्ति ॥ हे सखि, एणपत्नि, अच्युतो वो युष्माकं समीप गत किम् । ननु मत्यहं गच्छति किमाश्चर्यमिस्याशङ्क्याहु ॥ प्रियया ॥ यतो मत्कृदृशाम्नं लौकिकान दुतन्मी तिर्दर्शयते इत्याहु ॥ गात्रैरिति ॥ ननु प्रियया सहव गत इति कथ ज्ञात इतिचेत् तत्राहु ॥ कान्तेति ॥ सैव प्रिया, न वयम् । तयैवाऽप्रच्युतोऽस्माकं तु विहाय गत ॥ कुलपनेस्तस्य गैयम्य नो चित्तमिनीष्या व्यज्यते । यद्वा, इहास्मिन् वने वा इशा गात्रे सुनिर्दर्शते तत्वन् प्रियया सह सङ्गत. किं वर्तते । नेति न स्तव्यमित्याशयेनाहु ॥ का तति ॥

निद्धान्तिपक्षे, अथ मुनीस्थानीयां बुद्धिं पृच्छन्ति ॥ अपीति ॥ हे सखि बुद्धे वो इशा वृत्तीना गात्रस्तव तत्त्वरञ्जि अचेतनरूपैर्गीतै मुनिर्दर्शते तत्वन् प्रियया ब्रह्मप्रतिपादिकया तत्त्वमस्यादिरूपया मुखयया श्रुत्या स उपगत. सङ्गत, इशा त करण वर्तते किम् । यत. कान्तस्य परमात्मनोऽङ्गसङ्गाय प्रतिपाद्यप्रतिपादकसवन्धाय कुचयोस्तत्स्थानीयोपासनानिष्कामकर्मणा कुङ्कुमेन तज्ज्ञानतानिवेदिषया रञ्जितायाः कुलपते क्षेत्रस्वामिनः चदात्मनस्तत्सम्बन्धिन्या कुन्दस्रजस्तत्स्थानीयगुद्धसत्वमयमालायाः ग ध इह भाति सान्त्यादिरूपगुण प्रयुक्ता प्राणवेदाऽत्र दृश्यते इत्यर्थ ॥ ११ ॥

ततो वैगत्य काप्य गताया हारण्या फलभारेण नम्रोंस्तरुंस्त्वेलक्ष्य, भगवन्त दृष्ट्वा प्रणता इति मत्वा, प्रियासहितस्य गतिविलासात् सम्भाव्य स्नेहा पृच्छन्ति ।

बाहुं प्रियांस उपधाय गृहीतपद्मो
रामानुजस्तुलसिकालिकुलैर्मदान्धै ।
अन्वीयमान इह वस्तरव प्रणाम

किं वाऽभिनन्दति चरन् प्रणयावलोकैः ॥ १२ ॥

बाहुमिति ॥ प्रियायाः स्कन्धे उपधाय द्वितीयहस्तेन गृहीत पद्म येन स रामानुज'–अग्रजानामाऽस्मत्पति', मदा घैस्तुलसिकास्वलिभिरसमुदायैरन्धीयमानोऽनुगम्यमानः । अनन प्रियासाहित्यमनुमीयते । तुलसिका विहाय तदङ्गलिप्तोरुकुङ्कुमौरभद्रव्यसुगन्धलोभादनुगच्छतीति । तथेह वने चरन् हे तरवः प्रणाम च प्रणयावलोकैः प्रेमपूर्वकैरवलोकनैरभिन दति कि, न वाभिन दतीति प्रश्न' । यद्वा तथा चरन् अभिन दति आन द प्राप्नोति, व प्रणाम चाभिन दत्यऽनुमोदति किम् ॥ अनभिज्ञापक्षे तादृश ग धमाघ्राय तत्रैव स्थितास्तत्रत्यान् वृक्षान् पृच्छ त ॥ हे तरव किमर्थ प्रणाम कुरुत कृष्णप्रसादार्थमितिचेत्, स किमिह चरन् व प्रणाममभिनन्दति । यद्यपि भवन्तः साधव परोपकारशीला अनुकम्प्यास्तथापि भवदीयप्रणाम नाभिन दतीति वय जानीमः । कुत इत्याकाङ्क्षा तस्या यत्रासक्तचित्तत्व कार्यान्तरव्यग्रत्वाचास्त्यवलोकनाऽवकाश इति सासूयमाहुः ॥ बाहु वामभुज प्रियास्कन्धे उपधाय तत्कोमलत्वमालोच्य । किञ्च राधायास्त सुखगन्धनोत्पतिष्णूनां भ्रमराणा निवारणार्थमेव दक्षिणकरगृहीतपद्म ।
तथाचादौ चरन्– तद्गतिविलासव्यग्र ,पुनश्च तत्सवैकतानमानसश्चाऽतो न तस्यान्यन दृष्टिप्रसारणावकाश इति भाव । एतेन, ननु तामेवास्मान् दर्शयितुमागत कथमस्मत्प्रणाम नाभिन देदित्याशङ्कापि निरस्ता । तेन निवारिता एवएते भ्रमरा अनुगच्छन्तीत्याहु ॥ तुलसिकेति ॥ ननु भ्रमरकुलानामत्रानुपद गच्छतत्याशङ्क्याहुः ॥ मदा धैरिति ॥ मदो मत्ता मदान्धैरनुगम्यन्ते, भव्यजनैस्तु मदा धा नानुगन्तुमुचिता इति भाव ॥ रामानुज इति कठोरतामभिव्यञ्जयन्ति॥अभिन दतीति वर्तमानापदेशाच्छाखाना-

मनुत्थानाच्च कश्चिद्दर्शनयोग्यस्थाने स्थित इति सूचयन्ति । अभिनन्द नाक्षेपाच्च किमर्थं नम्रीभूता., शाखा उत्थाय समाहिता सन्तो-ऽस्मत्प्रियतचोरं स्वाङ्गाकरं निःशङ्कं सूचयतेति व्यञ्जयन्ति ॥

निवृत्तिपक्षे, वृक्षस्थानीयान् सधाताऩ् पृच्छन्ति ॥ बाहुमिति ॥ मिथाया मायाया अंसे बाहुं निधाय तामधिष्ठाय गृहीत पद्म जगदुपादानभूत पुष्करकूप येनस ।यतो रामा माया अनुजा अधीना यस्य स. । लसि=प्रकाशशील कःसुख तदीयमकरं दास्वादनपरं परमहसलक्षणाऽलिकुलैर्ध्यान दलक्षणमेदेन =भैविषयदर्शनारहैतैरनुगम्य मान इह सघातेषु चरन्, हे तरव प्रणामनमस्कारादिलक्षणकर्म किमभिन्दति । तथाचाभिनन्दनकर्तारमात्मान भवन्तः किं जानन्तीत्यर्थ ॥ १२ ॥

अहो किमर्थं तरवः पृच्छ्य ते । स्वस्त्रीसंनिधौ परस्त्रीभिः सह भाषण न करिष्यन्तीत्यत एताः स्वल्पाः प्रष्टव्या इति काश्चिदाहुः

पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पते ॥
नून तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥

पृच्छतेति ॥ हे सख्य इमा दृश्यमाना, लता पृच्छत । ननु यथा स्वसंनिधौ स्वपतीनामस्माभि सह भाषण दुर्घट तथा स्वपतिसंगतानामासां हृदे मनसा गतिर्दुर्घटेत्याशङ्क्याहु ॥ बाहूनिति ॥ यद्यपि वनस्पते शाखालक्षणान् भुजानाश्लिष्टास्तथापि नून निश्चयेन तस्य श्रीकृष्णस्य करजैर्नखै स्पृष्टा यत. पुलकानि बिभ्रति । अहो सर्वरसोपमर्दी अस्मत्प्रेष्ठरस । स्वपतिरसाविष्टानामपि तत्स्पृहादर्शनात् । न हि स्वपतिसंगतावीदृकपुलकोद्गमः संभवतीति भावः ॥ सममेतादितरपक्षयोरपि ॥

निवृत्तिपक्षे, हे सख्यो वनस्पतेः सघातलक्षणस्य वृक्षस्य वि-

षयलक्षणान् बाहूनप्याश्लिष्टा इमा लतास्तत्स्थानीयरागद्वेषादय इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितावित्युक्तत्वात् । नून तस्य चिदात्मन करा॰ मत्पयास्तत्र जातेन प्रादुर्भूतेन चेतनेन स्पृष्टा अहो उत्पुलकानि बिभ्रति सचेतनतयाऽवभाम त इत्यर्थः ॥ १३ ॥

उ मत्तकवत् पमच्छुरित्यतत प्रपञ्चित, तदुपसंहरन्, रमापते स्तास्ता विचेष्टा जगृहुस्तदात्मिका इति यदुक्त तत्प्रपञ्चयितुमुपक्रमते

इत्यन्मत्तवचो गोप्य कृष्णान्वेषणकातरा ॥
लीलाभगवतस्तास्ता ह्यनुचक्रुस्तदात्मिक ॥ १४ ॥

इतीति ॥ इत्येवमकारेणोन्मत्तवचो गोप्य' । ह्रस्वश्छान्दसः। यद्वा उ मत्तस्य वच इव वचो यासा ताश्च ता गोप्यश्च । यद्वा, उन्मत्त वदु एतावत्, ततो गाप्य॰ कृष्णा वेषणार्थकातरा अतिविह्वला भगवत स्तास्ता लीला अनुचक्रु – अनुकृतवत्य । यतस्तदात्मिकाः । तस्मिन् गाढासक्त्या तदभेदमापन्ना इत्यर्थ । यद्वा तस्मिन् श्रीकृष्णे आ त्मा चित्त यासा ता । तथाच तीव्र गाने तदात्मकत्वस्फूर्त्या कृष्णानुकरणम् । तदासक्तिप्राबल्याद्वा । पूतनाद्यनुकरण तु कृष्ण विषयकतद्धेतुकभयादिजनितपूतनाद्यात्मकत्वस्फूर्त्या व्याघ्राद्भिम- दो मत्तस्य व्याघ्राद्यनुकरणवत् । अतो न प्रेमविरुद्धभावसकरः । यद्वा प्रतिकूलानामनुकरण, योगमायैव तन्मध्ये गोपीस्वरूपा भूत्वा तत्तल्लीलासिद्ध्यर्थं चकार । यद्वा तत्तल्लीलाविशिष्टे भगवति अ न्तराविर्भूते बहिस्तल्लीलादर्शनस्य साक्षादसम्भवात् तथानुकरण कृ तवत्यः । तत्रोत्कृष्टाः कृष्णरूप, म यमा बलरामादिरूप, निकृष्टाः पूतनादिरूपम् । कृष्णस्य सदान दरूपस्य परमात्मनोऽन्वेषणे का तरा व्यग्राः । कातर्य प्राप्ता इति वा । तत षड्गुणैश्वर्यसम्पन्न- स्य परमात्मनः सम्बन्धि यस्तास्ता लीला हि प्रसिद्धा अनुचक्रु॰ ।

भगवत्कृत तत्तल्लीलानुकरण वर्णयामासु । वाच्यवाचकयोरभेदाद नुचक्रुरित्युक्तमिति सूचयितुमाह ॥ तदात्मका ॥ द्वे वाव ब्रह्मणो रूपे पर चापर चेत्यादिश्रुत ॥ १४ ॥

अथैतद्विवृणोति ।

कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत् स्तनम् ॥
तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम् ॥ १५ ॥

कस्याश्चिद् गोप्याः पूतनावदाचर न्त्या काचित् कृष्णवदाच रन्ती अहं कृष्ण इत्युक्तवती, ता कृष्णबुद्ध्याङ्के कृतवत्यास्तस्याः स्तनमपिबत् । यावच्छक्यते तावदनुक्रियते । अतोऽसुपानसामर्थ्या-भावात् स्तनपानमात्रमुक्तम् । तस्यापि द्वेषभावनाभावा मरणाभा-वः । अनुकरणात् तोकायित्वा तोकवदाचरित्वा तोकमात्मान मत्वेति वा । तोकात्मान कृत्वेति वा । शकटायती शकटवत् स्थि-ता प- चरणनाऽहन् ॥

निरुक्ति ।त्रे काचित् पूतनावदाचरण न परमात्मान वर्णयामास । काचि क्रष्णरूपण स्तनपानमनुकुर्वती काचित् तोकरूपमनु-कृत्य रोदनमनुकुर्वी शकटरूप परमात्मान चरणेन हननमनुकुर्वत निरूपयामासेत्यर्थः । एवमग्रेऽपि ॥ १५ ॥

दैत्यायित्वा जहारान्यामेका कृष्णार्भभावना ॥
रिङ्गयामास काप्यङ्घ्री कर्षन्ती घोषनिःस्वनैः ॥ १६ ॥

अन्या तृणावर्तदैत्यवदात्मान कृत्वा कृष्णार्भ तस्य बाल्य भावप्रतीमपर जहार । कापि अङ्घ्री कर्षन्ती घोषनि स्वनैरिङ्गया-मास जानुतवनी ॥ १६ ॥

तत्कृत दृ दावनविहारलीलानुकरणमाह ॥

कृष्णरामायित द्व तु गोपायन्त्यश्च काश्चन ॥
वत्सायती हन्ति चान्या तत्रैका तु बकायतीम् ॥ १७ ॥

द्वे गोप्यौ कृष्णरामायिते कृष्णरामवज्जाते । काश्चन गोपायन्त्यो गापबालानुकरण कृतवत्य । काश्चन वत्सरूपाश्च जाता इत्यादिद्रष्टव्यम् । तत्र वत्सासुरवदाचर ती काचिदन्या बलरामरूपा, मत्कृष्णो निहतोऽनेन वत्सको धेनुकादय. # इत्यनुसारेण हन्ति हननमनुकरोति स्म । काश्चिद्बकवदाचर तीमन्या कृष्णरूपा हन्ति स्म ॥ १७ ॥

अथ तत्कृत गवाह्वानादिलीलानुकरणमाह ।

आहूय दूरगा यद्वत् कृष्णस्तमनुर्वतीम् ॥
वेणु क्वणन्ती क्रीडन्तीमन्या शंसन्ति साध्विति ॥ १८ ॥

आहूयेति ॥ तत्र काश्चन गोरूपा जाता' काश्चन गोपालरूपा.स्तत्र यद्वत् कृष्णो दूरगा आह्वयन् वेणुक्वणन करोति तद्वत् तत् कृष्णमनुकुर्वतीं दूरगा गोरूपा गोपीराहूय वेणु क्वण ती क्रीड ती कान्तादन्या गोपरूपाः सा धि इति शंसं ति स्म ॥ १८ ॥

कस्याञ्चित् स्वभुज न्यस्य चलन्त्याहापरा ननु ॥
कृष्णोऽहं पश्यत गति ललितामिति तन्मना ॥ १९ ॥

गोपरूपायां कस्याञ्चिदपरा कृष्णरूपा भुज निधाय चलन्ती आह, ननु कृष्णोऽहं, ललिता मदीयां गतिं, हे गोप्य पश्यतेति । यन्मनस्तस्मिन्मनो यस्या' सा अतस्तदावेशात् तद्रूपा जानेत भाव । यद्यपीयं लीला पूर्वमनुक्ता तथाप्यत्र तदनुकरणस्यो

क्त्वाज्जातेति द्रष्टव्यम् ॥ १९ ॥

मा भैष्ट वातवर्षाभ्यां तत्त्राण विहित हि व ॥
इत्युक्त्वैकेन हस्तेन यतन्त्युज्जिदधेऽम्बरम् ॥ २० ॥

अपरा कृष्णरूपा, भीता इवावस्थिता गोपादिरूपा, हे गोपाद्यो वातवर्षाभ्यां भयहेतुभूताभ्यां मा भैष्ट । ताभ्यां वातवर्षाभ्यां मया त्राण विहितमित्युक्त्वा यतवती एकेन हस्तेनाऽम्बरमुत्तरीय व स्त्रमुज्जिदधे ऊर्ध्व धृतवती ॥ २० ॥

आरुह्यैका पदाक्रम्य शिरस्याहापरा नृप ॥
दुष्टाऽहे गच्छ जातोऽह खलाना ननु दण्डधृक् ॥ २१ ॥

एका कृष्णरूपा कालियरूपा काञ्चिच्चरणेनाक्रम्य तस्या. शिरसि आरुह्याह—हे दुष्टाहे, इतो गच्छ । ननु निश्चयेन खलानामह दण्डधृग् जातः । शिर स्थितिर्वृक्षशाखामालम्ब्य, अन्त करणे भगवत आवेशान्निरालम्बतयैव वा । यथा तदीययात्मन. शक्त्या वेशा तस्य नृपस्येति सबोधनाशय. ॥ २१ ॥

तत्रैकोवाच गोपाला दावाग्नि पश्यतोल्वणम् ॥
चक्षूंष्याश्वपिधध्व वो विधास्ये क्षेममञ्जसा ॥ २२ ॥

तत्र तासु मध्ये एका कृष्णरूपा गोपरूपा उवाच । हे गोपाः उल्वण दावाग्निं, पश्यत शीघ्र चक्षूंषि पिधध्वम् । निश्चयेनाऽञ्जसा क्षेम विधास्ये । अत्र विरहेण दावाग्निदर्शन, भावनया वा । अन्यासा तु तस्या वस्तुतो भगवद्भावभानात् तत्त्राणप्रार्थना । एवमेव वातवर्षस्थलेऽपि अत्यन्तमत्तानामेव भगवद्भावोदयात् ॥ २२ ॥

बद्धाऽन्यया स्रजा काचित् तन्वी तत्र उलूखले ॥

भीता सुदृक् पिधायास्य भेजे भीतिविडम्बनम् ॥ २३ ॥

तत्र तासु मध्ये अन्यया यशोदारूपया कावित् कृष्णरूपा तन्वी अत्यन्तसुकुमारविग्रहा मालया उलूखलरूपाया कस्याचिद्बद्धा भीता सुष्ठुदृष्टियुक्ता, सुनयनमास्य वा हस्तेनाच्छाद्य भीत्यनुकरण कृतवती ॥ २३ ॥

एवमनुकरण कृत्वा पुनरपि तथैव पृच्छमाना भगवतः पदानि ददृशुरित्याह ।

एवं कृष्णं पृच्छमाना वृन्दावनलतातरून् ॥
व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ २४ ॥

एवमिति ॥ तथाच मात्तोन्मादे भगवल्लीलानुकरणोत्साहे प्रश्न इत्येव भ्रममाणानां तासा भगवत्प्रसादेन समाहिततायां प्राप्तौ तच्चरण दर्शन जातमित्याशयेनाह ॥ व्यचक्षतेति ॥ परमात्मन' परमेश्वरस्य श्रीकृष्णात्मनावतीर्णस्य परमेष्ठस्येति वा । कस्मिंश्चिद् वनमदेशे भूमौ सम्भ्रान्ति पदानि दृष्टवत्य. ॥

निदृस्तिपक्ष, चित्तैकाग्रतासिद्धयर्थ भगवत्कृतलीलानुकरण वर्णयन्त्यः पुनस्तद वेपणप्रकार बोधयन्त्यो, वनोद्देशे अन्त करण क्षणस्य साक्त्विकभदेशे पदानि चिदाभासलक्षणानि चिल्लक्ष्यपदज्ञापकानि तत्प्रतिकृतिभूतानि व्यचक्षत तदवलोकन निरूपयामासुरित्यर्थ' ॥ २४ ॥

तानि दृष्ट्वा परस्परमाहु ॥

पदानि व्यक्तमेतानि नन्दसूनोर्महात्मन ॥
लक्ष्यन्ते हि ध्वजाऽम्भोजवज्राऽङ्कुशयवादिभि ॥ २५॥

एतानि पदानि स्पष्ट नन्दसूनोर्महात्मनः सन्ति । परमात्मनो

नन्दसूनुत्वेनाऽवतीर्णत्वात् तत्पदाना सर्वविलक्षणत्वादिति भा व. । यद्वा, नारायणसमो गुणैरित्युक्तत्वा महात्मन सर्वोत्कृष्ट स्य । हि यतो ध्वजादिभिर्लक्ष्यन्ते ध्वजादीना धारणास्थानायुक्त स्कान्दे । दक्षिणस्य पदाऽङ्गुष्ठमूले चक्र बिभर्त्यज * तत्र भक्तजन स्य रिपुवर्गच्छेदनाय स । मध्यमाऽङ्गुलिमूले च धत्त कमल मच्युत' । ध्यातृचित्तद्विरेफाणा लोभनायातिशोभनम् । पद्मस्याधो ध्वज धत्ते सर्वानर्थजय ध्वजम् । कनिष्ठामूलतो वज्र भक्तपापाद्रिभेद नम् । पार्ष्णिमध्येऽङ्कुश भक्तचित्तेभ-वशकारिणम् । भोगसम्प न्मय धत्ते यवमङ्गुष्ठपर्वणि । आदिपदात् स्वस्तिकादिसग्रहः । त थाच श्रीकृष्णमेव प्रकृत्य पाद्मे । षोडशैव तु चिह्नानि मया दृष्टा नि तत्पदे * दक्षिणे चाष्ट चिह्नानि इतरे सप्त एव च । ध्वजः पद्म तथा वज्रमङ्कुशो यव एव च । स्वस्तिक चोर्ध्वरेखा च अष्टको ण तथाऽष्टमम् । इन्द्रचाप त्रिकोण च कलशश्चाऽर्द्धचन्द्रकम् । अम्बर मत्स्यचिह्न च गोष्पद सप्तम स्मृतम् । षोडश च तथा चि ह्न शृणु देवर्षिसत्तम । जम्बूफलसमाकार दृश्यते यत्कुत्रचि दिति । यद्धा वजातपत्रैश्च चिह्नित चरणद्वयमिति तापिन्युक्तेः । ध्वजाङ्कितपदान्तेति वाराहाच । चक्राद्यङ्काऽऽत्तयत्ते सहैकोनविंशा- ति. । तत्र सर्वचिह्नानि श्रीकृष्णपादयोरेव । तदुक्त पाद्मे । अ ङ्काऽन्येनानि भो विद्वन् दृश्यते तु यदा तदा * कृष्णाख्य तु पर ब्रह्म सुविज्ञात न सशय. । द्वय वाथ त्रय चाथ चत्वार, पञ्च चैव च । दृश्यन्ते वैष्णवश्रेष्ठ अवतारे कथञ्चनेति ॥

निवृत्तिपक्षे नन्दसूनो आन न्दरूपमूर्त्यस्य परमात्मन एता नि चिदाभासलक्षणानि पदानि व्यक्तम् । किञ्च भगवच्चरणारविन्द स्थध्वजादिभिर्यतैः स्वचरणसक्ति-सर्वानर्थविजय-पापबन्धना ध्वस-मदनिवृत्ति-वैराग्यादिजनकैयुक्तानि लक्ष्यन्ते । तथाच स्मन्द

गुणे उद्रिक्ते भगवच्चरणारविन्दध्यानायासक्तेऽन्तःकरणे कामक्रोधादिनिवृत्त्या पुनः पुनर्भगवद्ध्यानात्तत्प्रत्ययनिवृत्तिद्वारा आसैर्भगवत्स्वरूपपर्य्यन्तं सगच्छमानैस्तत्स्वरूपप्राप्तिरिति भावः ॥ २५ ॥

तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ॥
वध्वाः पदैः सुपृक्तानि विलोक्यार्त्ताः समब्रुवन् ॥ २६ ॥

भगवतः पदानीति निश्चित्य तैस्तैस्तथाभूतैरेव भुवि लग्नैः पदैः पदवीं मार्गमन्वेषणं कुर्वत्यः स्वभावत एवाऽबलाः, विहारान्वेषणाभ्यां विशेषतो बलहीनाः कृताः, वध्वा श्रीमत्या राधाया पदैर्भुवि लग्नैः सुपृक्तानि मिलितानि विलोक्य तन्मध्ये तयेर्ष्यावत्यो मानिन्य काश्चिदार्त्ता मोहिताः सत्यः समब्रुवन् प्रथममार्त्तिविह्वलत्वात्तत्पदोपरि तासां दृष्टिर्न पतिता । भगवत्पददर्शनेनैवत्सम्मोहितानां किञ्चिद् दूरे गतानां तदुपरि दृष्टिः पतितेति ज्ञेयम् ॥

निवृत्तिपक्षे तैस्तैर्यथोक्तैरेकाग्रता प्राप्तैः साधनसमत्यैरग्रे भगवत्स्वरूपान्वेषणं प्रतिपाद्य त्योऽबलाः मत्यक्षादिभिर्वादानुवादपरत्वाभिर्मला, द्वा सुपर्णेत्याद्या भेदानुवादिन्यः श्रुतयो मुख्यवधूस्थानीयायाःतत्त्वमसिश्रुतेस्त्रिभिः पदैः सुपृक्तानि तदर्थविचारपरत्वेन तत्संमिश्राणि विलोक्यार्त्ताः सत्य समब्रुवन् ॥ २६ ॥

यदब्रुवँस्तदाह ।

कस्याः पदानि चैतानि याताया नन्दसूनुना ॥
अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ २७ ॥

कस्या इति ॥ अहो लघुत्वनिम्नत्वादिचिह्नैश्चिह्नितत्वात् स्त्रिया एतानि पदानि वर्त्तन्ते । तथापि कस्या अस्माकं मध्ये कस्याः । नवग्रामान्तरस्त्रियाः । यतो न दस्नुना सह यातायाः ।

अ यस्याः मेढ्रमाहिस न सम्भवति । तथाच का वा निष्ठुरा मेढ्र मेकान्ते नीतवती सा निश्चेतव्येति भाव । तत्रापि तेन स्कन्धे न्यस्त प्रकोष्ठभागो यस्या सा । पदानामनुपूर्व्वत्वादिद ज्ञातव्य । तच्च तस्या रात्रौ सुखेन नयनार्थं दूरेऽवला बलाश्रयनार्थं वा, रसाभिव्यक्त्यर्थं वा तदनुरूप दृष्टान्तमाह ॥ करिणा हस्तिना करेणोर्हस्ति या यथा । एतेन तस्या तस्य प्रीत्यतिशय , काममदाक्रान्तता तदधीनता चेति ध्वनितम् ॥

निवृत्तिपक्षे, एतानि पक्षोक्तमत्यर्थेषु प्रविष्टानि पदानि क स्याः । नन्दसूनुना परमात्मना सह यातया प्रतिपादकभावेन सहप्रविष्टायाः । तत्राप्यनेन परमात्मना असे शुद्धचतनलक्षणे भागे न्यस्त प्रकोष्ठस्थानीयस्तत्पादभागो यस्याः । साहित्ये दृष्टान्त । तथाच का वा अहेतुप्रतिपादने समर्थैत्यापातततस्ता श्रुत्य उक्तवत्य इति भावः ॥ २७ ॥

तत्सुहृद्भाषा आहु ।

अनयाऽऽराधितो नून भगवान् हरिरीश्वर ॥
यन्नो विहाय गाविन्द प्रीता यामानयद्रह ॥ २८ ॥

अनयेति ॥ तत्राभिज्ञापक्षे, अनया तेन सार्द्ध यातया सख्या नूनभगवान् आराधित । यद्यप्यस्माभिरप्याराधितस्तथाप्यनया य थाराधितस्तथा नाराधित । फलैलक्षण्यदर्शनात् । नचास्माभिरपि तथैवाराधित इति भ्रमितव्यम् । आराधनतारतम्यस्य तेन सम्यग् ज्ञात्वैव फलप्रदानप्रवृत्तत्वात् । यतो भगवान् अत व , हरि , विलक्षणैमेवत्या मम समान सुख दत्तवानिति तदीयदु खस्य ह र्ता । ननु तदाराधनपराणामस्माकम तर्हानेन किमिति दु ख दत्तवानितिचेत तत्राहु ॥ ईश्वर =कर्तुमकर्तुम यथा च कतु सम

र्थ.। तत्कल्पक विलक्षण फलमावेदयन्ति॥ यद्यस्मान्नोऽस्मान् स र्वा विहाय प्रीत. सन् या रह एकान्तमनयत्। गोविन्द' साधार णोऽपि सर्वेन्द्रियग्राहकस्तस्या असाधारणो जात इत्यहो तस्या उत्कर्षातिशय इति भाव ॥ अनभिज्ञपक्षे, अनया जन्मान्तरे नून निश्चयेन हरिर्दुःखहर्ता महाविष्णुराराधितो, न त्वस्माभिः। त त्रापि भगवत्त्वेनेश्वरत्वेन च। यतोऽत्र भाग्यातिशय' परमस्वात ल्लभ्य च तथा लब्धमित्याशयेनाहु ॥ भगवानीश्वर इति ॥ यतः सर्वासा रक्षणेन लब्धगोत्रि दनामाऽपि नो विहाय प्रीतो या रहो ऽनयत्। अनेन, राधयत्याराधयत्याराध्यते वा राधेत्यर्थात् तन्नाम सूचितम्। तथाच तादृशी राधैवाऽतस्तस्या एव पदानीति किम र्थमनुयया, कस्या इत्युक्तवतीमिरिति भावः। स्पष्ट नामाग्रहण प्रतिपक्षाणा गोपीना राधाया वा सकोचात्। मुनिना तु प्रबन्धे वर्यादौ तन्नाम्न स्पष्टमुक्तत्वात् तत एव गोपीना मानिनीना ज्ञात व्यानीति कस्या अपि नामानुक्त्या सूचितम्। परोक्षप्रिया हि देवा इति न्यायश्चानुसृतः। एतदुग्र धस्य गम्भीरार्थकत्व च ध्व नितम्॥ मानिनीपक्ष, हे अनया परमोत्कर्षवत्या राधायाः स्पर्द्धा प्याचरणरूपान्यायवत्य, हरि सर्वासा सामा यतो मनोहर्ता श्री कृष्णो राधित पृथस्तया राधामेन' माप्त। शकन्ध्वादित्वात् पररूपम्। यद्वा, राधा सर्वापेक्षयाधिक्येन प्रिया सजाता अस्ये ति तारकादित्वादितच्। यतो भगवान् कामातुर, श्रीमानिति वा, कीर्तिमानिति वा। भग श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिष्विं त्यमर। तत्रापीश्वर'। ग्रहणपलायनवञ्चनादौ समर्थ'। यद् य स्माद् गा इन्द्रियाणि वि दति वि दयति वा गोवि दस्तया परस्पर रमणाभिलाषु। श्रीराधाया पदचिह्नान्येकोनविंशतिसख्याका न्युक्तानि। तत्र वामचरणे यवचक्रच्छत्रवलयोर्ध्वरेखाकमलध्वज

यष्टीपुष्पाङ्कुशार्द्धचन्द्रा इत्येकादश । दक्षिणचरणे शङ्खगदात्रेदी कुण्डलशक्तिपर्वतरथचामराणीत्यष्टौ ॥

निवृत्तिपक्षे, तत्पक्षपातिन्य , ऐदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा, नेह नानास्ति किञ्चनेत्याद्या आहु' ॥अनया नूनं भगवान् जगत्पालको, हरिः संहर्ता, ईश्वर उत्पादक आराधितः प्रतिपादित ।अखण्डैकरसस्य प्रतिपादनेन तत्स्वरूपस्य भगवत्त्वादेः प्रतिपादितत्वात् । यद् यस्मात् सकलश्रुतिगम्यत्वाद् गोविन्दोऽपि प्रीतः सन् नो विहाय या रह' अनयत् । तज्जन्यचरमवृत्तिविषयत्वमगच्छदिति भाव' ॥ २८ ॥

तटस्थास्तु–अहो किमथ विवादो भवतीभिरारब्ध', सखी चरणोपरि दृष्टिं दत्त्वा भगवच्चरणाब्जरेणून् पश्यतेत्याहु' ।

धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ॥
यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥ २९ ॥

धन्या इति ॥ आल्य सख्यो गोविन्दस्य परमात्मनश्चरणकमलरेणवोऽमी उपलभ्यमाना अहो आश्चर्यं धन्या अतिपुण्या । यान् रेणून् ब्रह्मा ईशो महादेवो रमादेवी उपादानशक्तिः, अघस्य स्वस्वाधिकारे सम्भावितस्य दोषस्य विरहदुःखस्य वा निवृत्तये मूर्ध्नि दधु । तथाच तद्वियोगजनकदोषनिवृत्तये तद्धारणं कर्तव्यमिति भावः । स्ववचसि विश्वासार्थं सम्बोधयति ॥ हे आल्य इति ॥ अनभिज्ञापक्षे, अहो तत्स्पर्शाऽभावे रेणुतोऽपि वयं तुच्छा इति भाव. । प्रेम्णोऽसतोऽपि माहात्म्यस्य स्फारकत्वस्वाभाव्यात् प्रेमकृतैवेयं रेणुमाहात्म्यभावना । यथा भरतेन, किं वा अरे आचरितम् इत्यादिना मृगपदस्पर्शेन भुवो भाग्यं वर्णितम् ॥ मानिनीपक्षे, यथा रेणवस्तथाऽस्माऽप्यतो नास्ति मात्सर्यकृत्यमिति भावः ॥

निवृत्तिपक्षे, सत्यं ज्ञानमनन्तं ब्रह्म, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्याद्यास्तटस्था आहुः ॥ हे सख्यः, अहो अमी गोविन्दस्यौपनिषदस्य परमात्मनः सम्बन्धिनस्तद्ध्यानास्पदस्य हृदयकमलस्य रेणवस्तनस्था शुभ्राश्चित्प्रत्यया धन्या यां स्तथाभूतान् प्रत्ययान् ब्रह्मादयो देव्या वेदशरीरायाः सरस्वत्या मूर्ध्नि मस्तके दधुः, वेदान्तार्थाखण्डाचिदेकरसपरमात्मस्वरूपानुसन्धानपराः समाधिस्था बभूवुः । अघस्य विक्षेपस्य निवृत्तये ॥ २९ ॥

पुनस्तत्प्रतिपक्षा अहो किमुच्यते भवतीभिः, समाहितमनसामिय कथा, न तु क्षुब्धचित्तानामित्याशयेनाहुः ।

तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ॥
यैकापहृत्य गोपीनां रहो भुङ्क्तेऽच्युताऽधरम् ॥ ३० ॥

तस्या अमूनि अशक्यादर्शनानि पदानि नोऽस्माकं वियुक्तानामुच्चैः क्षोभं व्याकुलतां जनयन्ति । यतो या सर्वासां गोपीनां समानमच्युताऽधरमेकाऽपहृत्य तत्रापि रहसि स्थित्वा भुङ्क्ते । ननु बहुस्त्रीसम्बन्धवशादुपरतिं प्राप्तस्य भगवतः कुतोऽधराऽमृतदानाय प्रवृत्तिः सम्भाव्यते इत्याशङ्कानिरासायाऽच्युत इत्युक्तम् । तथा चाऽच्युतस्य नास्ति विरततासम्भावनेति भावः । यद्वा तद्विरहदुःखादप्यस्माकं तस्यास्तत्संयोगजं यं दुःखं महदुत्पन्नमित्यच्युतपदेन ध्वनितम् । तथा न प्रच्युत इत्यर्थावगमात् ॥

निवृत्तिपक्षे, पुनस्तद्विरुद्धार्थिका आहुः ॥ यस्या उक्तश्रुतेरुच्चैः सर्वोत्कृष्टत्वेनानुसन्धीयमानानि पदानि नः क्षोभं स्वार्थप्रच्युतिलक्षणं जनयन्ति यतो यैका सर्वासां श्रुतीनां प्रतिपाद्यमर्थमच्युताधरमेकरसानन्दस्वरूपं रहो भुङ्क्ते । तत्तत्प्रतिपाद्याद्वैशिष्ट्याद्दर्थाद्वैशिष्ट्यमात्रमपहृत्य सर्वविशेषविनिर्मुक्तं प्रतिपादयतीत्यर्थः ॥ ३० ॥

अहो मास्तु कलहस्तत्पदानि सम्प्रति न दृश्यन्ते इति तट-स्थाभिरुक्ते सति, अहो सत्य तत्पदान्यत्रास्मिन् प्रदेशे न लक्ष्यन्ते इति तद्वाक्ये सर्वाभिरङ्गीकृते तदन्तरङ्गा. काश्चित् सुहृद आहु ॥

न लक्ष्यन्ते पदान्यत्र तस्या नूनं तृणाङ्कुरै ॥
खिद्यत्सुजाताङ्घ्रितलामुन्निन्ये प्रेयसी प्रिय ॥ ३१ ॥

नेति ॥ अहो सा प्रेयसा विश्लिष्टेति न भ्रमितव्य, किं तु तामुन्निन्ये बाहुभ्यामुत्थाप्य स कटिभागे गृहीतवानतस्तस्या. प दान्यत्र न लक्ष्यन्ते इत्येव निश्चयेन ज्ञातव्यम् । उन्नयनाभिमत माहु ॥ तृणाङ्कुरै खिद्यती सुजाते अङ्घ्रितले यस्यास्ताम् । नन्वेव तर्हि स्कन्धमारोपितवानिति कुतो न कल्प्यत इतिचेत् त-त्राहु ॥ प्रेयसीम् ॥ रसाविर्भावकर खेदजनक कटिभागारोप णमेव तादृश्या समुचितमिति भाव । ननु लिङ्गपादा तत्रैव कुतो न स्थितेत्याशङ्क्याहुः ॥ प्रिय ॥ यतस्तस्या अपि अविश्लेषो यथा तथा परिरम्भणीयाऽभीष्ट इति भाव. ॥

निवृत्तिपक्षे, अहं ब्रह्मास्मीत्याद्यास्तदेकार्थप्रतिपादिका आहु ॥ तस्याः पदानि अखण्डैकरसे परमात्मनि न लक्ष्यन्ते मा क्तिद्दृत्त्या प्रवृत्तानि नोपलभ्यन्तेऽतो नूनं तृणाऽङ्कुरस्थानीयै र्वाच्याऽर्थै. खिद्यती सुजाते एकाऽर्थनिष्ठत्वात् समानाधिकरण भूते अङ्घ्रितले कोमलपदं यस्यास्तामुन्नि ये । उद् ऊर्ध्व शक्ति दृत्ते प्रस्थाप्य भागत्यागलक्षणया सर्वोत्तम स्वरूपमानन्देकरसमा श्रोधितवान् । यत. प्रेयसीं प्रिय., समर्गाभङ्गिसम्पत्ज्ञानहतु त्वात् प्रेयसीं, स्वयं च तदेकपरायास्तस्या प्रिय इति भाव ॥ ३१ ॥

पुनश्चुला अधिकमग्नानि श्रेष्ठपदानि च दृष्ट्वाऽतिक्षुब्धस्वा न्तास्तटस्थाःभमुख्य प्रतिपक्षा आहुः ।

इमान्यधिकमग्नानि पदानि वहतो वधूम् ॥
गोप्यः पश्यत कृष्णस्य भाराक्रान्तस्य कामिनः ॥ ३२ ॥

इमानीति ॥ अहो सत्यमुक्तमेताभिर्यतो वधू कामिनो न तु प्रेमिण, प्रेमवतीनामस्माक त्यागात्, कृष्णस्येमानि उपलभ्यमानानि पदानि भाराक्रान्तानि यतोऽधिकमग्नानि पश्यत स्थित्वा विचारयत यतो भवत्यो विचारचतुरा इति गोप्य इति सम्बोधना ऽऽशयः । कामिन इत्यादिपदैरसूया व्यज्यते । तथाच स्थूलदृष्ट्या बध्वा सुकुमारशरीरेणाद्वहन भारेण पीडाकरमसन्तकामिचेष्टितम । पदर्शनादप्यधिकखेदकमिति भावः ॥

निवृत्तिपक्षे, सर्वकाम इत्याद्यश्रुतय आहु. ॥ हे गोप्य, परलब्रशक्तिमत्परमात्मस्वरूपमतिपादनपरा यथोक्तश्रुतिलक्षणां वधू वहतो यथोक्तरीत्या प्रतिपादकत्वेन धारयत इमानि कृष्णस्य सदानन्दविग्रहस्य सिद्धक्षादिकामनाविशिष्टस्य पदानि ध्यानयोग्याऽधिकार्थे नःकरणमत्ययलक्षणानि । अव्यक्ता हि गतिर्दुःख देहवद्भिरवाप्यत * इत्युक्तत्वाद् भाराक्रान्तानि यथोक्तश्रुत्यर्थवदनाऽसमर्थानि पश्यत ॥ ३२ ॥

अहो एतावतैव क्षुब्धस्वान्ताः सम्पन्नाः ? प्रेयसा तु प्रेयस्यर्थेऽपदपि यत् कृत तत् पश्यतेति तत्सुहृद आहुः ।

अत्रावरोपिता कान्ता पुष्पहेतोर्महात्मना ॥
अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृत ॥
प्रपदाक्रमणे एते पश्यताऽसकले पदे ॥ ३३ ॥

अत्रेति ॥ सार्द्धेन । अत्र पुष्पहेतोर्महात्मना चतुरशिरोमणिना

कान्ता अवरोपिता । महे केशप्रसाधनोत्सवे आत्मा मनो यस्य इति वा ॥ अत्र तु प्रसूनानां पुष्पाणामवचयः प्रियाया अर्थे प्रेयसा कृत. । पुष्पहेतो. प्रियार्थे इत्यनन तत्प्रियार्थमेवावरोपण, न तु भारजनितश्रमनिवृत्त्यर्थमिति सूचितम् । तन्निह कुतो ज्ञात मित्याशङ्क्याहुः ॥ प्रपदाभ्यां पादाग्राभ्याम् आक्रमण भुवो यत्र ते अतकले पदे पश्यत सम्पूर्णयोस्तयोर्भुवि चिह्नानवलाकनात् प्र तिपक्षाभिप्राय पदे इति द्वित्वम् । तेन, पदा यत्र महात्मन इति विष्णुपुराणोक्तबहुत्वेन पूर्वोक्तबहुत्वेन च न विरोध. ॥

निष्टत्तिपक्ष, नान्योऽस्तोऽस्ति द्रष्टा, नान्योऽस्ति श्रोतेत्याद्या स्तत्पक्षपाति य आहु' सार्द्धेन । अत्रैषु ध्येयाकारतायोग्यप्रत्ययेषु महात्मना यथोक्तकान्ता, अवरोपिता स्वार्थबोधकत्वाद्रहिता । कुत इत्यत आहु. । पुष्पस्य तदर्थाकारदृत्तिलक्षणफलहेतुभूतविषैका न्यलक्षणस्य हेतो ,एषु प्रत्ययेषु प्रियाया अर्थस्याविभावार्थमेका न्यलक्षणपुष्पतश्चयः प्रेयसा सम्पादित. । यत. पदाभ्यां पदयो र्वा वाच्यार्थाभ्यामाक्रमण ययोस्ते, अमकले जीवत्वोपासकत्वेश्वर त्वोपास्यत्वाक्रान्ते पदे चैतन्य पश्यत ॥ ३३ ॥

केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम् ॥
तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् ॥ ३४ ॥

इद श्रुत्वा सम्यक् तद्भूभिभागमवलोक्य कृष्णजान्वन्तरुपवि ष्टायास्तस्याश्चिह्नमालक्ष्य विपक्षा आहुः ॥ केशेत्यर्द्धेन ॥ अहो ऽत्ययुक्तम् । यतोऽत्र कामि या, न तु प्रमत्त्याः । स्वस्वकीर्त्रेश्वयि त्वा एका गृहीत्वा गतत्वात् कामिना, न तु प्रेमिणा प्रेमवतीनां नामस्माक विरहपीडाननुसंधानात् । केशानां प्रसाधन वेण्याका रेणाऽऽपीडाकारेण वा देवदत्तकङ्कतिकया नखैर्वा कृतम् । तुशब्दो

विपक्षनिरासार्थः । न त्वत्र ज्ञानार्थमुपवेशनं सम्भवति । द्वयोरपि कामाक्रान्तत्वादिति सूचयितुं, कामिन्या इत्यादि ॥ अहो सत्य मिति तत्सुहृद आहुः ॥ तानीत्यर्द्धेन ॥ कान्तामधिकृत्य तानि पुष्पाणि चूडाकारेण बध्नता भुवमुपविष्टम् । यद्वा चूडायां पुष्प मवेशनमुत्थितेनाऽपि भवति, अतस्तानि क्रमेण चूडाया निवेशयता कान्तासमीपे विष्टमुत्थितमपि ध्रुवम् । अतस्तत्साहाय्य दुर्लभमनः किमर्थं स्पर्द्धया खिन्ना भवतेति भावः ॥

निवृत्तिपक्षे, अत' पर पराजितास्तत्पक्षमनुमोदयन्ति ॥ केशप्रसाधनमिति॥कामिन्यास्तत्त्वविपादनकामनावत्यास्तत्पदप्रतिपाद्यस्य केशस्य ब्रह्मायधीशस्य प्रसाधनमत्र ध्येयाकारमत्ययेषु कामिना स्वाऽनुगृहीतमोक्षाऽभिलाषुमुणा कृतम् । तत्त्वमसिश्रुतिलक्षणां का तामधिकृत्य तानि तत्त्वमसीति पदानि चूडयता चूडास्थानीयैं कव्यक्तिपरत्वं नयताऽधिकारिणा सहोपविष्टमविभक्ततया स्थितमित्यर्थः ॥ ३४ ॥

एवं गोपीमुखैनैव राधया सह भगवल्लीलामुपवर्ण्य स्वयमाह शुक-

रेमे तया चात्मरत आत्मारामोऽप्यखण्डितः ॥
कामिनां दर्शयन् दैन्यं स्त्रीणां चैव दुरात्मताम् ॥ ३५ ॥

रेम इति ॥ आत्मनि स्वरूप एव रतो, न तु स्व्यादौ । अत एवाऽखण्डितः स्वस्वरूपादप्रच्युतस्तथाभूतोऽपि भगवॉस्तत्प्रेमवशीकृततया राधया यथा ताभिस्तर्कित तथा रेमे चेत्यर्थः । यद्वा अखण्डित । अस्याः सकाशादविच्युतः सन् । यद्वा अप्यर्थे च । आत्मरतोऽपि आत्मारामोऽपि अखण्डितोऽपि स्त्रीविभ्रमैर नाक्रष्टोऽपि तया रेमे । ननु तथाभूतः किमर्थं रेम इत्याशङ्क्य लोकोपदेशार्थमेव विडम्बनं चकारेत्याह ॥ कामिनामिति ॥ का

भिनस्त्वेवमत्रातिदीना भवन्ति दैन्येन चैवमेव निरोधमाप्नुवन्तीत्युपदिशंस्तेषामनुकरणं कृतवानिति । तथा स्त्रीणां दुरात्मतां दौष्ठ्यं दर्शयन् । वशीकृतपुरुषे दौष्ट्यमेव कुर्वतीत्युपदिशन्नेव कृतवानित्यर्थः । तथाच कामवशेः स्त्रीवशैश्च न भाव्यमिति लोकान् शिक्षयामासेति भावः । यद्वा ईदृशप्रेमाविहीना कामिनः कामिन्यश्च स्वक्रीडयापरास्ताश्रिता इत्याह ॥ कामिनां देहेन्द्रियतर्पणेच्छारूपकामस्वभावानां दैन्यं दुर्गतत्वं स्त्रीणामपि ताद्दशीनां तदन्यासां दुरात्मनां दुर्गतनायकवशीकारेण गर्वादिदुष्टस्वभावतां दर्शयन्नित्यर्थः । यद्वा, कामिभिः सुरतप्रार्थनादिपरैर्दीनैर्भवितव्यं, स्त्रीभिस्तत्राऽसमतिपराभिर्दुरात्मभिर्भवितव्यामिति रसिकान् बोधयन्नित्यर्थ ॥

निवृत्तिपक्षे, सर्वश्रुतिविरोधनिवृत्त्या तथा रेमे तत्प्रतिपाद्योऽस्य ईहत, अखण्डैकरसः सर्वकामविनिर्मुक्तः, अत एवात्मारामश्च । चकाराभ्यां, सत्यज्ञानानन्तानन्दस्वरूपः । अधिकार्यन्तःकरणदृश्यारूढो जात इत्यर्थः । न चाऽस्ति, द्वा सुपर्णा सयुजा सखाया समाने वृक्षे परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीतीतिश्रुतिविरोधः । तत्प्रकरणपर्यालोचनयाऽस्य मन्त्रस्याभेदपरत्वावगमात् । तथाहि । ब्रह्मैवेदममृतं पुरस्तादिति वाक्ये ब्रह्मणः सर्वात्मत्वे निर्दिष्टे, ननु ब्रह्मणो भोक्तृभेदाद् भोक्तृत्वमपि स्यादतो न युक्तं सर्वात्मत्वमित्याशङ्कानिरासायाऽयं मन्त्रः पठ्यते । यौ द्वौ बिम्बप्रतिबिम्बभूतौ जीवेश्वरावस्मिञ्छरीरे वर्तेते तयोर्मध्ये यो बुद्धिप्रतिबिम्बभूतस्तदभेदाध्यासात् तद्धर्माभिमानी कर्मफलं भुङ्क्ते स एवान्यः बुद्धितादात्म्यरहितः सन् स्वरूपभूतचैतन्यात्मना भोगरहितः प्रकाशते । औदासीन्यबोधाभ्यां चैतन्यमात्रमुच्यते । तथाच भोगानुवादो भोगनिषेधशेष इति । न च समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः, जुष्टं यदा

पश्यत्य यमीशमस्य महिमानमिति वीतशोक इत्युत्तरश्रुतिविरोधः । अस्याः पूर्वोक्तानन्दस्य स्वाभाविकत्वबोधनपरकत्वात् । तथाहि । जीवेश्वरपुरुषाश्रये शरीरे पुरुषो बुद्ध्युपहितो निमग्नः कर्तृत्वाभिमानी, अत एव, मुह्यमानः तत्कारणमोहावृतोऽनीशया स्वस्यानन्दरूपेश्वरभावामतीत्या शोचति विषयागमापायनिमित्तं दुःखमनुभवति । जुष्टं कार्यकारणसंघातैः सेवितम् अविवेकिभिस्तदात्मतया गृहीत यदाऽधिकारी, अन्यं विवेकात् शरीरत्रयात् पृथग् भूतं तत्साक्षितयावगतशोधितत्वम्पदार्थमीशं सन्तं पश्यति तदास्यात्मत्वेन अवगतस्य महिमानमपरिच्छिन्नं दासताम् इति एति ना तरीयकतया वीतशोकः सर्वानर्थविनिर्मुक्तः । यद्वा, जुष्टं विवेकवैराग्यादिभिः प्रक्षालिताशयमलैः सनकादिभिर्निरन्तर्येणात्मत्वेन सेव्यमानम्, अ य कार्यकरणसंघातादिलक्षणमीशं यदा पश्यतीति । नाऽपि, पृथगात्मानं प्रेरितारं च मत्वा जुष्टः ततस्तेनामृतत्वमेतीति विरोधः । न ह्यात्मानं प्रेरितारं च पृथङ्मत्वाऽमृतत्वमेतीति श्रुत्यर्थः । पामराणामपि तादृशमननसत्त्वेनाऽमृतत्वमाप्तिप्रसङ्गात् । किन्तु शरीरात्रयभेदेन गृहीतमात्मानं पृथङ्मत्वा पृथक्कृतमात्मानं प्रेरितारं च मत्वा ईश्वरत्वेन च निश्चित्य अमृतत्वमेतीति । तस्मान्नास्ति कयाचिदपि श्रुत्या तस्याः श्रुतेर्विरोधः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः, यन्मद्न्यन्नास्ति कस्मान्नु बिभेमि तदिदमप्येतर्हि य एव वेदाऽहं ब्रह्मास्मीति, स इदं सर्वं भवति, उदरमन्तरं कुरुते अथ तस्य भयं भवति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, नात्र काचन भिदास्त्यत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोतीत्यान्याः श्रुतयो भेदमपाकुर्वन्त्यस्तस्याभेदश्रुत्यैव मुख्य रमणमावेदयन्तीति सङ्क्षेपः । विपक्षे दोषं दर्शयन् रेमे इत्याह ॥ कामिना पुरुषाणां श्रुत्यर्थविचारा

ऽधिकृताना वै यमनीशत्वाभिमानेनानर्थजालप्राप्तिं दर्शयेस्तथावे धाना स्त्रीणा चैव दुरात्मनां दुष्टात्मरूपता ससारानर्थास्पदजीवात्मतां दर्शयन । यथोक्तश्रुत्यर्थविचारविधुरस्य पुरुषादेरनर्थनिष्टत्त्यभाव बोधयन्तीत्यर्थ । तथाच श्रुति —

यदा चर्मवदाकाश वेष्टयिष्यन्ति मानवा. ।
तदा देवमविज्ञाय दु खस्या तो भविष्यतीति ॥ ॥ ३५ ॥

इत्येव दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः ॥
या गोपीमनयत् कृष्णो विहायान्या स्त्रिया वने ॥ ३६ ॥
सा च मेने तदात्मान वरिष्ठ सर्वयोषिताम् ॥
हित्वा गोपी. कामयाना मामसौ भजते प्रिय ॥ ३७ ॥

अथेतरगोपीकृत तल्लीलावर्णनमुपसहरति इत्येव भगवल्लीला' परस्पर मदर्शय त्यश्चेरु' । यतो, गोप्यः ॥ गोपरूपेणावतीर्णस्य भगवत सम्बन्धि य । वस्तुस्वभावादेव गोपालजे तस्मिन् प्रेमवत्यो, न तु शास्त्रेण भगवदीया जाता । विचरन्त्यश्च विचेतसो जाताः प्रकारत्रयस्यापि समाप्तत्वादित्थव्याकुलमानसा बभूवुरित्यर्थः ॥

अथ वृषभानुनन्दिन्या विप्रलम्भाख्य वर्णयितु पीठिका रचयति ॥ कृष्णः सदान दरूपस्तस्यामान दमाविर्भावयितु यां गोपीमनयत् । अन्या स्त्रियो वने विहाय । अ यासु स्त्रीत्व प्रगल्भता मात्राक्य तासा त्याग । तस्या गोपीत्व मुग्धात्वमालक्ष्य नयन मिति द्योतयितु स्त्रियो, गोपीमित्युक्तम् ॥

निवृत्तिपक्षे, इत्येवम् अविचेतम समाहितचित्तस्य पुरुषस्य ब्रह्मस्वरूप दर्शय त्यस्तस्या त करणष्वक्षुषु विचेरुः । अन्याः श्रुतिलक्षणा. स्त्रिया वन अ त.करणे या गोपी कृष्ण. सदा

ऽऽत्म स्वरूप' परमात्मा अनयत् मम रूपावबोधिकेयमिसवभा सयत् ॥ ३६ ॥

तस्यास्त्यागे निमित्तमाह ॥ सा चेति ॥ चकारात् पूर्वं स र्वासां स्मयो जात इदानीं तस्यामिति गम्यते । सर्वाभ्य उत्कृष्ट मात्मान मन्यमानाया, साधारण रमण स्मयकर नासीदधुना त्व ऽसाधारण, तस्मात् सापि गर्व प्राप्ता । अनेन समुदायदोषेण भग वान् त्यजति, किं तु प्रत्येकदोषेणेत्यपि ध्वनितम् । साऽपि स र्वासां योषितां म ये आत्मान परमोत्कृष्ट मेने । तन्निमित्त तच्चेतसि स्फुरितमाह ॥ कामयाना, ॥ कामयमाना:, कामो यानमागमनसाधन यानामगति वा । गोपी स्वभोग्या अपि हित्वा सर्वासामपि साधार ण्येन प्रिय , असौ सर्वोत्तमो मामेकां भजते मन्मनोऽनुकूलमाचर- ति इति विचार्येत्यर्थ, ॥

निवृत्तिपक्षे सापि श्रुतिरात्मान सर्वश्रुतीनां मध्ये श्रेष्ठ मेने यत, सर्वा अपि गोपीः स्वसम्बन्धिनी, स्वमतिपादनकामनावती र्हित्वा असौ प्रत्यगभिन्न, परमात्मा प्रिय आन दघनो मां भजते मत्प्रतिपाद्यता प्राप्तः । महावाक्यश्रुतिर्वो य, परमात्मेत्यधिकारि चेतसि स्फुरितमिति भाव, ॥ ३७ ॥

तती गत्वा वनोद्देश दृप्ता केशवमब्रवीत् ॥
न पारयेऽहं चलितुं नय मा यत्र ते मन ॥ ३८ ॥

तत इत्यत्र मनसि स्फूर्त्यन तर तेनैव सार्द्धं कस्मिंश्चित् म देशे प्रियेण सहैव गत्वा अखर्वगर्वाक्रान्तस्वान्ता सा, केशव स्व स्या केशान् वयते ग्रथ्नाति तम् । तथाच स्वाधीनका तायास्त स्या रसावहो दर्पो जात इति भावः । रमणबहुवनभ्रमणादिना जातश्रमाऽहमत, पर चलितुं न पारये न शक्ता भवामि । ननु

मो मुग्धे ताभ्यो दूरमग्रेऽतिमनोज्ञस्थानं वर्तते तत्पर्यन्तं यथाकथ-ञ्चिच्चलनीयमितिचेत् तत्राह ॥ नयेति ॥ एवं तर्हि पूर्ववन्मामङ्के निधाय त्वमेव नय प्रापय, अहं तु पदमात्रमपि गन्तुं न शक्तेत्यर्थः । ननु किं पौष्पाभरणपुष्पतल्पकल्पनाद्यर्थं पुष्पोद्यानं नयामि, किं वा यमुनापुलिनं तत्र विहाराद्यर्थमित्यपेक्षायामाह ॥ यत्र ते मनः अनेनाऽऽलस्यमनुमोदनं च सूचितम् । यद्वा स्वप्रेमरज्ज्वौ मां बध्वा धन कान्त निश्चित्य मामगर्वां केशव ब्रह्मादिसमस्तस्वामिन देहादि सम्बन्धातीतं प्रत्यब्रवीत् ॥

निवृत्तिपक्षे, ततोऽन्तःकरणलक्षणस्य वनस्य उद्देशो श्रेष्ठप्रदेशो शोभनप्रत्यये गत्वा अहमेव प्रत्यगभिन्नब्रह्मावभासिकेति गर्ववती ब्रह्माद्यधिष्ठानभूतं परमात्मानमब्रवीत् । अहं चलितुं स्वार्थाच्च्यावयितुं केनापि प्रमाणेन, वादिना वा न शक्या । अतस्त्वत्सम्बन्धाऽधिकारिमनो यत्राऽखण्डैकरसे त्वयि वर्तते तत्रैव मां नय तत्प्रतिपादकत्वेनैव मां स्थापय । तथाच यथोक्तश्रुतिवेद्यत्वं ब्रह्मणोऽस्मीति विवेकिचेतसि स्फुरितमिति भावः ॥ ३८ ॥

तच्छ्रुत्वा भगवतैवं विचारितम् । अनया मां स्वाधीनमवगत्य अपालस्यादिमयं नर्मवाक्यमुक्तमतो नर्मवाक्यमुक्त्वा तर्ह्यन्तर्धानं कार्यम् । तच्चावश्यकम् । यत एतेनैतच्छृङ्गाररसपोषणं, महाप्रेमवत्या अस्या मद्वियोगजनितदशाया अवलोकनं मत्सम्श्लेषजनितसौभाग्यमदको धयाऽतिविस्मितस्वान्तानां तासां परमचमत्कारमभिधुनिमज्जनकारया असाधारण्या अस्या मद्विरहावस्थाया दर्शनपूर्वकं सर्वाभिरभिरमणाऽनुकूलस्यैकमत्यस्य सम्पादनं च सेत्स्यतीति तदन्तर्दधिमेत्याह ॥

एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति ॥

ततश्चान्तर्दधे कृष्ण सा वधूरन्वतप्यत ॥ ३९ ॥

एवमिति ॥ एवमुक्तः श्रीकृष्णो मम स्कन्ध आरुह्यतामिति प्रियामाह । यद्वा, स्कन्धः भुजकाण्ड काय चेति कोशात् स्कन्धः कायः । स च योग्यत्वादङ्करूपः । साऽपि तदुक्तेन नर्माऽनुबुद्ध्वा तत्स्कन्धमारोढुं प्रवृत्ता । ततस्तत्प्रवृत्त्यनन्तरमेवाऽन्तर्दधे । यतः कृष्णः सदानन्दस्वरूपोऽन्तर्दधे, अतः सा तद्दर्शनैकजीवना वधूः परमप्रिया विश्लेषासहा अन्वतप्यत परमपश्चात्तापमगच्छत् । तेन च बहुधा विललाप ॥

सिद्धान्तिपक्षे, एवमुक्तः परमात्मा स्कन्धः तत्स्थानीयमेकदेशविशेष्य चैतन्यमात्रमारुह्यतां प्रतिपाद्यतामित्येवविधामाह । भागलक्षणया चैतन्यमात्रीकृत्य यथोक्तश्रुतेरधिकारिणावगतमित्यर्थः । ततो यथोक्तश्रुत्या ब्रह्मणः सुवेद्यत्वावगत्या तत्र कृष्णः अपरिच्छिन्नसदानन्दस्वरूपः परमात्मा अन्तर्दधे परिच्छिन्नतामाप्त्याऽविज्ञाततां गतः । यदि मन्यसे सुवेदेति, दहरमेव नूनं त्वं वेत्थ, अविज्ञातं विजानतामित्यादिश्रुतेः । सा वधूः तल्लक्षणा श्रुतिरन्वतप्यत पुनः पुनरनधिकारिणा विचारिता, अहो अस्य ब्रह्मणः श्रुतिवेद्यता कथमिति ॥ ३९ ॥

तदुक्तविलापमाह ।

हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज ॥
दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥ ४० ॥

हेति ॥ आर्तिसम्बोधनमिदं सर्वत्र योज्यम् । हा नाथ स्वामिन् पालक हा रमण प्रियाचित सुखप्रद, हा प्रेष्ठ प्रेमविस्तारक । तथाचानाथस्य तव मद्विमुक्ततयाऽवस्थानं नोचितमित्याशयेनाह ॥ क्वासीति ॥ आलिङ्गनं स्मृत्वाह ॥ महाभुज ॥ दैन्येनाह ॥ ते

दास्याः ॥ सख्यादौ अयोग्यायास्तत्रापि कृपणाया एवंविधदुःख सोढुमशक्तायाः परिहर्तुं वाऽज्ञानन्त्या मम, सन्निधिं दर्शय स न्निहितोऽस्मीति ज्ञापय । यतस्त्व सखा, मुख्यसख्या अपराधा-क्ष न्तव्या एवेति भावः । यद्वा, हा हेति पश्चात्तापे । अयुक्त जातमित्य र्थः । यद्यपि मया अयुक्त कृत, तथापि त्वया नाह त्याज्या, किन्तु दोष एवोपेक्षणीयो, यतस्त्वमेव मम स्वामीत्याशयेनाह ॥ हे नाथ ॥ ननु सकृदप्रासौ साहाय्य करिष्यामीतिचेत् तत्राह ॥ हे रमण । तथाच रमणस्य भोक्तुस्तव भोग्याया मे त्वत्तो दूरेऽव स्थान परमसकटरूप, तस्मात् त्राण कर्तुं योग्योऽसीति भाव । ननु भोग्येच्छया भोक्ता न प्रवर्तते, किन्तु स्वेच्छया । तथाच ममेच्छा भावात् कथं रमणे मद्वाञ्छिरित्याशङ्क्याह ॥ हे प्रेष्ठ ॥ यद्यप्येव, तथापि मम प्रीतिविषयस्याभावात्त्वद्विरह मरणमेव सम्भाव्यतेऽतो ऽनुग्रहबुद्ध्या तथा कुर्वित्यभिप्रायः । अतस्तथाभूतस्त्व क्वापि गन्तु मयोग्योऽस्यैव स्याः । अह व्याकुलत्वाज्जानामि तत पृच्छामि क्वासीति ॥ झटिति कथय, नोचद् गच्छन्ति मम प्राणा इत्याशयेन पुनराह क्वासीति ॥ इत्युक्ता भूमौ निपातिता मूर्च्छाभिमुखा उ त्थानार्थे सबोधयति ॥ हे महाभुजेति ॥ यतस्तथाह स्वामी, तत्रापि सम्प्रति कृपणा तस्या मम सन्निधिं दर्शय ॥ हे सखे ॥ सख्युस्तवेदमुचितमिति भाव । यद्वा, हे नाथ, त्वदेकप्राणाया स्त्वदधीनाया इमे प्राणा सम्प्रति ग तुकामा मया रक्षितुमशक्या, अतस्त्वमागत्याशु सरक्षेत्याशय. । तदगमने तवात्य त दु ख भविष्य ति । सर्वापेक्षयोत्कृष्टत्वेन समतायाः मयि मृतायाम यत्र रतिमल भमानस्य पश्चात्तापेन रोदनावश्यम्भावादित्याशयेनाह ॥ हे रम णेति ॥ नन्वस्तु मम दुख, तव तेन किमितिचेत् तत्राह ॥ प्रेष्ठे ति ॥ प्रेष्ठस्य तव दु ख कोटिगुणित स मन्ये त फलिष्यतीत भाव.

ननु सर्वथा निर्गन्तु प्रवृत्ता माणा मयापि कथं संरक्ष्या इतिचेत् तत्राह ॥ हे महाभुज, क्वासि क्वासि । झटित्यागत्य स्वभुजामृतसञ्जीवनौपधेन सुकरन्तद्रक्षणं सम्पादयेति भावः । नन्वेवं तर्हि, न पारयेऽहं चलितुमित्येवं किमर्थमुक्तवत्यसि, ततः सापराधां त्वां न स्पृशामीति चेत् तत्राह ॥ दास्यास्ते ॥ यद्यपि तदानीं प्राप्तगर्वयाऽऽज्ञत्वादविवेकात् तथोक्तं, सम्प्रति तु त्वन्निवृत्त्या दासीभावं प्राप्तास्मि, तत्रापि कृपणा परमदीना जातास्मि । ततः क्षमैवोचिता । इतः परं मरणस्यैवावशेषादपराधनिमित्तस्य दोषस्य निवृत्तत्वान्न कोप इति भावः । किञ्च वस्तुतो नास्ति ममापराधस्त्वयैव दास्ययोग्याया मम सख्यं कृतं, तदनुरूपं च मयाऽनुष्ठितमित्याशयेनाह ॥ हे सख इति ॥ ननु नास्ति मम कोप इतिचेत् तर्हि सन्निधिं दर्शय। प्रसन्नः सन् मत्समीपे आगतोऽसिचेत् तत्तर्हि विरहव्याकुलस्वान्तायाः पश्चात्तापदुःखेनान्धीकृतनेत्रायाः मम सन्निधिं स्पर्शादिना दर्शय, पश्चाद् अवहिता सती द्रक्ष्यामीति भावः । एवं विलपन्ती भगवत्स्पर्शादिकमलब्धवती ततः परं विलापेऽप्यक्षमा मूर्च्छिता सती भूमावपतदित्यपि ज्ञेयम् । मोहितां ददृशुरिति वक्ष्यमाणानुसारात् ॥

निवृत्तिपक्षे, अथ ब्रह्मणः साक्षात्स्ववेद्यस्वाभिमानं विहाय स्वजन्यवृत्त्यावरणनिवृत्त्या सन्निधिं प्रार्थयते ॥ हा नाथेति ॥ हेति स्वजन्यवृत्तिरहितानाक्रोशति ॥ हे नाथ, सर्वेश्वर, हे रमण, जगत्सृष्टिस्थितिभङ्गलक्षणक्रीडापरायण—तत्पदार्थ, हे प्रेष्ठ परप्रेमास्पद महाभुजाऽसंख्यातभुजाऽऽदिमहेश्वर—त्वम्पदार्थ, असि असीत्येवं नवकृत्वस्तत्त्वोपदेशपराया अभिकारिभिर्मदर्थाग्रहे कृपणाया दीनतां प्राप्ताया मम क्वचित् क्वचित् सखे निरुद्धैरिन्द्रियैः सह रममाणे शुद्धेऽन्तःकरणे, सन्निधिम् आवरणनाशकवृत्त्युत्थानेन मत्प्रतिपाद्यता

प्रकटयेत्यर्थः ॥ ४० ॥

अथ ता अपि तत्राशु समागता इत्याह ।

अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः ॥
ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम् ॥ ४१ ॥

भगवतो मार्गं मृगयमाणा गोप्यः, अविदूरतः समीप एव तां दुःखितां प्रियविश्लेषजन्येन तापेन मूर्च्छितां समानदुःखाक्रान्तत्वात् सखीं तथाभूतां दृष्ट्वा विगतेर्ष्यास्ता वस्त्रवातादिना सचेतनां कृतवत्य इत्यपि द्रष्टव्यम् ॥

निवृत्तिपक्षे, भगवतो मार्गं विदूरतोऽन्विच्छन्त्यो गोप्यः प रमात्मसम्बन्धिन्यः श्रुतयो दुःखिता आसन् । अहोऽस्माकं साक्षात्परमात्मप्रतिपादिका नास्तीति । यदा मुख्यामपि सखीं समानविषयत्वात् प्रियेण चिदात्मना योऽयं विश्लेषेण श्लेषो वाच्यवाचकत्वलक्षणसम्बन्धस्तत्र मोहितामत एव दुःखितां ददृशुस्तदा च त्किञ्चित् स्वास्थ्यं प्राप्ता इत्यर्थः ॥ ४२ ॥

तया कथितमाकर्ण्य मानप्राप्तिं च माधवात् ॥
अवमानं च दौरात्म्याद् विस्मयं परमं ययुः ॥ ४२ ॥

अयि सखि किं वृत्तमिति ताभिः पृष्टया तया हे सख्यो मुग्धाऽहं तेन नीतेत्यादिनिश्चयपर्यन्तं कथितं वृत्तमाकर्ण्य तत्र माधवाल्लक्ष्मीपतेः कान्तिपतेः सुन्दराद्वा मानप्राप्तिं चाकर्ण्य दौरात्म्यात् स्वदौर्जन्याद् अवमानं त्यागलक्षणं चाकर्ण्य परमं विस्मयं ययुः । अहो महान्तमियं मानं लब्धवती, स चैवंविधं मानं दत्वा कथमवमानं कृतवानाश्चर्यमिदमित्येव परमं विस्मयं प्राप्तवत्यः ॥

निवृत्तिपक्षे, तया यथाश्रुत–तत्त्वम्पदार्थयोरभिन्नत्वं कथितं

माकर्ण्य माधवात् स्वजन्यब्रह्मविद्यापतेर्मानस्य प्रामाण्यस्य प्रासिं चाकर्ण्य, दूरे आत्मा शुद्धचिदानन्दघनो निर्विशेषो यस्याः सा दूरात्मा तद्भावो दौरात्म्य, तस्माद्वागविषयप्रतिपादकत्वादव मान तद्विषयकप्रमानुत्पादकत्व चाकर्ण्याहो लब्धप्रामाण्याया अस्याः कथमप्रामाण्यमिति परमविस्मय ययुरित्यर्थ ॥ ४२ ॥

ततस्ता हस्ते धृत्वोत्थाप्य तया सहिता अन्वेषणे प्रवृत्ता इत्याह।

ततोऽविशन् वनं चन्द्रज्योत्स्ना यावद्विभाव्यते ॥
तमः प्रविष्टमालक्ष्य ततो निववृतुर्हरे ॥ ४३ ॥

तत इति ॥ ततो विस्मयप्राप्त्यनन्तर पदचिह्नानां वने प्र वेशमालक्ष्य वनमाविशन् तत्र यावत्पर्यन्त वृक्षाणा विरलत्वाच्चन्द्र ज्योत्स्ना विभाव्यते तावत् । ततो निबिडवृक्षेषु घनीभूततमःप्रविष्ट पदचिह्नैरालक्ष्य हरेरन्वेषणान्निवृत्ताः । स्त्रीत्वाद् भयेन तमो ना विशन्निति भावः । यद्वा हरेः सबन्धि यस्तथाच तत्र धूर्तान्तरा स्थितिशङ्कया न प्रविष्टा इति भाव. । यद्वा, अस्मासु तमः प्रवि ष्टासु सतीषु स बहिर्निःसृत्य गमिष्यतिचेत् सर्वथा न मिलिष्यतीति, न तत्र प्रवेश इत्याशयः । यद्वाऽस्मासु प्रविष्टासु सभ्रमाद् धकारे पलायनपरायणस्य परमसुकुमारपादाद्यवयवस्य प्रेष्ठस्य खेदो भविष्यतीति विचार्य्य निवृत्ता इत्यभिप्रायः । अथवा प्रकाशक राङ्गस्य भगवतोऽत्र प्रवेशो तमःप्रवेशो न सभवतीति तत्र प्रविष्ट तम आलक्ष्य तर्कयित्वा निववृतुरित्याशयः॥

निदिध्यासपक्षे, ततो विस्मय प्राप्त्यानन्तर यावद्ब्रह्मकलक्षणचन्द्र स्य ज्योत्स्ना तत्र तत्पदार्थे तत्प्रकाशो विभाव्यते तावदतद्भिरसना र्थमविशन् । अग्रे चैतन्यघने परमात्मनि तम. प्रविष्टप्रकाशाद् सामर्थ्याद् आलक्ष्य हरे. सबन्धि य. श्रुतयो निववृतु ॥ ४३ ॥

तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥
तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ४४॥

ननु सर्वथा कृष्णमलब्धवत्यः प्राप्तपरिश्रमाः स्वगृहान् प्रति कुतो न गता इति चेत् तत्राह ॥ नात्मागाराणि सस्मरुः । आत्मानं परिश्रमादियुक्तं, देहं गृहागाराणि गृहाँस्तत्रत्यानि वस्तूनि च न स्मृतवत्यः । स्मरणं विना कथं गमनादिकं तासां भवेदिति भावः । ननु कुतो न सस्मरुरित्याशङ्क्याह ॥ तन्मनस्का इति ॥ तस्मिन् भगवति मनो यासां ताः । तथाच स्मरणकरणस्य मनसो भगवति प्रावण्यात् कथं यस्मरणं भवेदिति भावः ॥ आलापद्वारापि स्मरणं वारयति ॥ तदालापास्तत्सम्बन्ध्यालापो यासां ताः । तथाच गृहं न प्रति गतं तत्सम्बन्धिभाषणे कस्या अप्यवकाशो न जात इति भावः ॥ नापि हस्तादिसंज्ञया सूचनावकाशः कस्या अप्यासीदित्याशयेनाह ॥ तस्यैव विचेष्टा पूर्वकथा यासां ताः । ननु कदापि मनसा गेहाद्यनुसंधानं कुतो न जातमिति चेत् तत्राह ॥ तदात्मिकाः ॥ स आत्मा यासां ताः । तथाचात्मतादात्म्यं तासां तदन्यानुसंधानादिकं दुर्लभमिति भावः । किञ्च गेहादिस्मृतिसंपादकं दुरदृष्टमपि नोत्थितं, तन्नाशकतद्गुणकीर्तनपरत्वादित्याह ॥ तदिति ॥ गुणान् गोवर्द्धनोद्धरणादिना गोकुलरक्षणादीन् । यद्वा, यतः काश्चित् तन्मनस्काः, अहो मेष्ट' समति कुत्र वर्तते, कथं मिलिष्यतीत्यादितद्विषयकमनोराज्यपराः । काश्चित् तदालापाः । अहो अस्मान् विहाय कथं गतः, इतः परं कुत्रान्वेषणीय इत्यादितद्विषयकवार्तालापपराः । काश्चित् तद्विचेष्टाः पूतनास्तनपानादितद्विचेष्टाकरणपराः । काश्चित्तदात्मिकास्तस्मिँल्लीनमनस्कत्वात् समाधिस्था इव तदेकस्फूर्त्तयः । काश्चिद

तद्गुणानेव गायन्त्यः सत्यस्तदाऽऽत्मागाराणि न सस्मरुः । यद्वा कदाचित् तन्मनस्काः कदाचित् तदालापा इत्येव योज्यम् ॥

निष्पत्तिपक्षे, काश्चित् तन्मनस्काः, सत्यगभिन्नब्रह्मविषयकाभिप्रायाः । काश्चित् साक्षादेव तदालापाः, सत्यत्वादिरूपेण तस्य प्रतिपादिकाः । काश्चित् तद्विचेष्टाः, सर्जनादिरूपतच्चेष्टाप्रतिपादिकाः । काश्चित् तदात्मिकाः, तस्मिन्नात्मा तत्प्राप्तिसाधनध्यानादिरूपः स आत्मवत्त्वेन वा प्रतिपाद्यो यासां ताः कारागृहस्थानीयानि तानि । काश्चित्तद्गुणान् सर्वज्ञत्वसर्वेश्वरत्वादिरूपानेव गायन्त्य आत्मनोऽगाराणि अज्ञानाहङ्कारादीनि न सस्मरुः । परमार्थत्वेन न प्रतिपादयामासुरित्यर्थः ॥ ४४ ॥

पुनर्विरहव्याकुलचित्ताः परस्परं विचारयामासुः । अहो कुत्र गतस्य तदन्वेषणं विधेयमिति कयाचिदुक्ते, अहो अन्वेषणं प्रियस्य क्लेशमात्रावहम् । समीपमागता अस्मानालक्ष्य पलायनपरस्य क्लेशावश्यम्भावादित्यन्याभिरभिहिते, अहो सत्यं तस्य करुणां विना तत्प्राप्तिर्दुर्घटाऽतस्तत्प्राप्त्युपायो विधेय इत्यपराभिः कथनं पूर्वं विचार्य तत्कीर्तनमेव बलवदुपायं निश्चित्य तदर्थं पुनः कालिन्द्याः पुलिनमागता इत्याह ।

पुनः पुलिनमागत्य कालिन्द्याः कृष्णभावनाः ॥
समवेता जगुः कृष्णं तदागमनकाङ्क्षिताः ॥ ४५ ॥

पुनरिति ॥ यत्र प्रेमपूर्वं सङ्गम आसीत् तदेव कालिन्द्याः पुलिनं स्वसुखहेतुभूतमसरच्छन्दम् । यत्र वस्तु लुप्यते तत्रैवान्विष्यत इत्याशयेनागत्य शुद्धकृष्णभावनाः । प्रेष्ठमेव भावयन्ति ध्यायन्ति तथा तस्य श्रीकृष्णस्यागमनं काङ्क्षितं यासां ताः, समवेता मिलिताः सत्यः कृष्णमेव जगुरूर्ध्वं गानं चक्रुः । विरहजनकदोषनिवृत्त्य

ऽर्थं तस्य करुणोत्पत्त्यर्थं चोच्चैर्गान, तदर्थं च समवेतत्वम्। कस्या अपि भाग्यात् स्नेहेन कृपया वाऽऽगच्छेदित्याशयेन वा समवेताः। अन्यां काञ्चिदादाय पुनः पलायनं कुर्यादित्याशयेन वा ॥ निद्वास्तिपक्षे,पुनर्मायालक्षणायाः कालिन्द्याः पुलिन इति ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्यायां गूढार्थदीपिकायां
दशमस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥ २ ॥



## अथैकत्रिंशोऽध्यायः ॥

एकत्रिंशे शुभाध्याये गोपिकागीतसञ्ज्ञके ॥
प्रार्थयन्त्यो जगुः कृष्णं प्रेम्णा गोप्य इतीर्यते ॥ १ ॥

अहो तस्य कलगीतेनाकृष्टा यथा तदन्तिकं प्राप्तास्तथा सोऽप्यस्मद्गीतेनाकृष्टोऽस्मदन्तिकं प्राप्स्यतीत्याशयेन गानमहत्त्वानां भगवत्प्रियाणां गानमुदाहरति ॥

श्रीगोप्य ऊचुः ॥

जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि ॥
दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते १

जयतीति ॥ मङ्गलार्थमादौ जयतीति प्रयोगः । तथा च मङ्गलाऽर्थकत्वादादौ क्रियापदप्रयोगो न दोषावहः । अहो व्रजकृतार्थतार्थं कृतावतारेण त्वया सर्वोऽपि व्रजः कृतार्थीकृतस्तत्त्वया वयं किमर्थमुपेक्ष्य ते इत्याशयेनाहुः ॥ तवाजस्य जन्मनाऽऽदिकारणविदुरस्य जन्मना स्वेच्छामात्रविलसितेन जन्मना प्रादुर्भावेण व्रजस्तत्स्थानं राजयति समस्तभूमिभुवःस्वर्लोकप्रदेशेभ्यः सर्वेभ्यो ह्यप्यधिकं तेभ्य उत्कर्षेण वर्तते । तत्राप्यधिकं वैकुण्ठादपि जयति यद्यपि तत्रापि भगवान् वर्तते तथाप्येवंविधं न माधुर्यैश्वर्यविधा लीला नाऽऽस्तीति । यद्यपि जन्मस्था । मथुरा, तथापि तत्स्थानात्तदनुपलम्भात् । देवकीवसुदेवाभ्यामपि न दृष्टं यशोदावत्त्वं तु जन्मोपलब्धमपि तु विष्णुस्वरूपदर्शनमात्रम् । अत्रत्यलीलादर्शनं तु सर्वस्याऽपि दुर्वारमतो व्रज एवोत्कृष्टतम इति भावः । ननु मज्जन्मना व्रजस्य परमोत्कर्षो भवतीभिः कथमवगत इतिचेत् तत्राहुः ॥ श्रयत इति ॥ हि यस्मादिन्दिरा श्रीरत्र व्रजे श्रयते । वैकुण्ठे तु सैव प्राधान्यात् सर्वैराश्रीयत इत्यर्थः । तत्र हि शश्वत् सर्वदा तु से

च निरया भार्याऽसस्तस्या नैश्चिन्त्याच सर्वदाऽऽश्रयणमावश्यक-मत्र तु बहीनां सपत्नीनामस्माकं सन्त्वादवसरलाभाय सर्वदा सेवन-म् । युक्तश्चैतत् । पतिव्रताशिरोमणिभूतायास्तस्या, भक्तेष्वनुग्रहा-तिशय ख्यापयितुम् याधीनतया वर्तमानस्य पत्युरनुवर्तनमिति भावः । यस्मादस्मदर्थमत्र भवतो जन्म, यस्माच्च मास्ति लक्ष्म्या अप तयाऽङ्गीकृतत्वादतो, हे दयित, दृश्यतां त्वया प्रत्यक्षीभूय-ताम् । प्राणप्रियस्य प्रत्यक्ष तव प्राणस्थितिसाधनमिति सम्बोधना-शयः । किञ्च तावका व्रजस्त्रियस्त्वां दिक्षु विचिन्वते । तथाचात्रा-ऽनुग्रहार्थमवतीर्णस्य तव ब्रह्मादिभिरन्वेषणमुचित, न तु व्रजवा-सिभिरिति भावः । ननु युष्माकं तादृशी भक्तिर्नास्ति इति कृत्वा-ऽहं तिरोहित इतिचेद् तत्राहु ॥ त्वयि धृता अनव. प्राणाः सर्वेन्द्रि-याणि याभिस्तास्तथाचैवंविधाः । त्वदीयानाम् अनाथवद्दिक्षु भ्राम्य-तीनामिदं महदसङ्गतमिति महद्दैन्यं व्यज्यते ॥ अथाभिप्रायपक्षे, हे दयित, ते जन्मना व्रजस्य सर्वोऽपि जनोऽधिकं जयति । यद्दिनमा-रभ्याच तव जन्म जात तद्दिनमारभ्य ब्रह्माण्डस्थेषु मध्ये कस्याचि-दपि व्रजवासिनां मध्ये कस्यापि पराजयो न जात इत्यैश्वर्यस्य परा काष्ठा ध्वनिता ॥ इन्दिरा सपत्न्यादिरूपा श्रीरपि अत्र व्रजे शश्वन्निरन्तरं श्रयते । श्रीरिति स्वनामसार्थक्याय व्रजमलङ्कृत्य वर्तते हि प्रसिद्धमिदमिदानीं लोकत्रये । तथाच, नारायणसमो गुणै-रिति ज्योतिर्विदग्रगण्येन गर्गाचार्येण भवज्जन्मपत्रे लिखितत्वा-न्नारायणसमत्वं त्वय्यनुभूयते व्रजे वैकुण्ठतुल्यत्वम् । अतोऽस्माकं विरहरहितवैकुण्ठवासिसमानत्वं कुतो नास्ति । तस्मादस्मास्वपि तथात्वं सम्पादयितुमवश्यमस्माभिर्भवान् दृश्यताम् । नच वैकुण्ठ-वासिनां नारायण इव युष्माकं नाहं प्रेष्ठ इति चेत् तत्राहु ॥ दिक्षु तावका इति ॥ सर्वासु दिक्षु यावज्जन्मत्वामाप्यस्माभिरन्विष्य

ते, तथापि भवास्त्र लभ्यते तत्र वय किं कुर्म इति भाव' । तत्रापि तावकान्‌वदनन्या, अत एव त्वामेव । अनेनासमाहितता निरस्ता । ननु परोक्षार्थं तिरोहितेन मयाऽवगत-- नाद्यापि युष्मत्प्रेमपरिपाकास्था सम्पन्ना । मद्विरहेऽपि जीवनदर्शनादितिचेद्‌ तत्राहुः ॥ त्वयि त्वत्प्राप्त्याशया धृतासवो जीवन्तीत्यर्थः । तद्विरहस्या तु तावकाना जीवन दुर्लभमतो झटिति दृश्यतामामरणपर्य्यन्तपरीक्षा या अनुचितत्वादिति भावः ॥ मानिनीपक्षे, तव व्रजा यास्मदाद्यक जन्मना अधिक जयति श्रीश्च शश्वदत्रैव श्रयते, तथाभूतास्तावकास्त्वां विचिन्वन्त इति दृश्यतां ज्ञायताम् । परमोत्कर्षैश्वर्य्यादिहेतुभूतस्वजनदुःखाऽपरिज्ञानरूपमान्य नोचितमिति भावः । न च साधारणसम्बन्धः, किन्तु मेष्ठो भवानिति सम्बोधनाशयः । किञ्च, त्वयि धृतासवस्त्वत्प्राप्त्याशया धृतजीवनाः । तथाच तत्कि दृश्या मृतास्वस्मासु तवापि परमोत्कर्षादिक न स्यास्यतीति भावः। यद्वा, ननु दयिते मयि वियुक्ते भवतीनामेतावत्पर्य्यन्तं कथं प्राणा देहे स्थिता इतिचेत्‌ तत्राहु ॥ त्वयीति ॥ कठोरशिरोमणिभूते असख्यातस्वसखीजनपरमतापहेतुक्रीडापरे त्वयि दुःखजनितदुःखाऽम्बुधिमग्ने धृताः स्थापिताः प्राणाः याभिस्ताः । तथाच यथा स्वगृहे दह्यमानेऽप्यन्यदीयगृहस्थ वस्तु न दह्यते तथा त्वयि स्थितत्वादस्मत्प्राणानामेतावत्पर्य्यन्त रक्षा जातेति भावः । यद्वा यद्यपि तव जन्मना व्रजोऽधिक जयति श्रीश्च शश्वदत्रैव श्रयते तथापि दृष्टैवेद सर्वम् । यतस्त्वयि धृतासवस्त्वदर्पितप्राणास्तावकास्त्वा विचिन्वते । अद्यापि दुःखिता एव सन्ति, तस्मात्‌ सुहृदनतुग्राहिकाया सम्प्रद्धैत्तैयर्थ्य दृश्यता ज्ञायताम् । तद्वैयर्थ्यपरिहाराय प्रयक्षीभूयतामिति वा । दयितत्वात्‌ तवेद‌ हित वदाम इति सम्बोधनाशय. ॥

निदर्शिपक्षे, अधिष्ठानभूतचिदात्मनैवेदं देहादिसमस्तं शोभत इति श्रुतय आहुः ॥ जयतीति ॥ हे दयित परमेमास्पद तव जन्मना प्रादुर्भावेण व्रजो देहेन्द्रियसंघातोऽधिकं जयति सत्तास्फूर्तिमत्तयाऽवभासते तथेन्द्रियशोभाप्यत्रैव निरंतरं श्रयते सौन्दर्यादिगुणाक्रान्ततया प्रतीयते । तस्माद् यस्यात्मनस्तव सत्तादिना मिथ्याभूतस्यात्य तथत्विनस्याऽप्येव प्रतीतिस्तेन त्वया दृश्यताम् । विद्वदनुभवविषयत्व प्राप्यताम् । के ते विद्वांस इत्यपेक्षायाहुः ॥ ये त्वयि धृतासवस्तावकाः । तानि सर्वाणि सयम्य युक्त आसीत मत्परः, मच्चित्ता मद्गतप्राणा इत्यादिनोक्तलक्षणा भवदीयास्त्वां सर्वाधिष्ठानभूतं परमात्मानं विचिन्वते अन्वेषणपरा सन्ति । तथाच पञ्चकोशविवेचनात्मकान्वेषणप्रकारं उक्तस्तैत्तिरीयश्रुतौ । तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तरात्मा प्राणमयः । तस्माद्वा एतस्मात् प्राणमयादन्योऽन्तरात्मा मनोमयः । तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमयः । तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्माऽऽनन्दमयस्तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा । असन्नेव स भवत्यसद् ब्रह्मेति वेदचेद्, अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति । यद्वा व्रजः श्रुतिकदम्बस्तव जन्मना प्रादुर्भावेण प्रकटवेदार्थभूतेन त्वयाऽधिकं जयति शोभां च महतीं प्राप्नोति । हि यस्मादतो ये त्वयि धृतासवस्त्वां विचिन्वते तेषां श्रुतिकदम्बे भवान् दृश्यतामित्यर्थः । यद्वा तवाविर्भावेण व्रजः संघातोऽधिकं जयति, श्रीश्च विद्वद्देहादौ श्रयते । अतो ये विचिन्वते तेषां दृश्यताम् । एषु पद्येषु पादद्वितीयाक्षरस्यैक्यं केषुचित् पादेषु प्रथमसप्तमाक्षरस्यैक्यमलङ्कारिकतमयसिद्धमावर्ण्यात् कचिदैक्यमिति द्रष्टव्यम् । एकादशाक्षरे त्रिष्टुप्छन्दके छन्दांसि चतुः षड्युत्तरषटशत

द्दोषपरिहारायाग्र्यतामिति भावः ॥

निवृत्तिपक्षे, तव दर्शनेनैव संसारनिवृत्तिर्नान्यथेत्याहु' ॥ शार दति ॥ शारत्कालीनजलवत्स्वच्छे आशये अ त'करणे ते तव दृशा दर्शनेन किं किमप्यनिर्वचनीयमज्ञानं शुस्करस्य तत्तद्विषयस्य दा सिकारतत्तदाकारा अन्तःकरणवृत्तीश्च निघ्नतो नाशयतो विदुष इह वधो नाशो ज मयरणलक्षणससृतिमवेशलक्षणो न भवति । तथाच श्रुतय. आत्मन्येवात्मान पश्येत् । तरति शोकमात्मवित् । ब्रह्मविदा- प्नोति परम् । न स पुनरावर्तते इत्याद्याः । अज्ञानतत्कार्ययोर्ज्ञाननि वर्त्यत्वमुक्तमित्याशयेनाहु. ॥ अताधुजातमनिर्वचनीयोत्पत्तिमद्, यत् सरसिज सदृपद्मलक्षणे सरसि अधिष्ठाने प्रतीत कमलस्था- नीयमज्ञान तदुदरश्रीश्च तद्रूपम मुष्णाति नाशयतीति तथा तवे त्यर्थः ॥ २ ॥

किञ्च बहुभ्यो मृत्युभ्यो रक्षित्वा विरहाग्निना मारणाय प्र वृत्तौ निमित्त न विद्म इत्याशयेनाहु ।

विषजलाप्ययाद् व्यालराक्षसाद् वर्षमारुताद्वैद्युतानलात् ।
वृषमयात्मजाद्विश्वतो भयादृषभ ते वय रक्षिता मुहु ॥३॥

विषेति ॥ विषजल कालियहृदजल तेनाप्ययो गोपानां नाश स्तस्मात् । व्यालराक्षसाद् वत्सपालान् गिलतोऽघासुराद् वत्सपाला- दिरक्षणेन परम्परया वयमपि रक्षिता. । वर्षयुक्ता मारुताद् वैद्यु तानलादशनिपाताच्चेन्द्रकृताद् गोवर्द्धनधारणेन । साक्षाद् वृषो वृ- षभासुरारिष्टः । मयात्मजाद् व्योमासुरात् । तच्चरितमग्रे वक्ष्यमाण मपि रासोत्सवात् पूर्वं जातमिति द्रष्टव्यम् । तल्लीलाया आत बाल्य एव योग्यत्वात् । किं बहुना अ यस्मादपि सर्वतो भयाद्, हे ऋषभ सर्वोत्तम वय रक्षिताः । तथाच यथा श्रेष्ठत्वात् पूर्वं रक्षि

स्तास्तथेदानीमपि दर्शनप्रदानेनास्मद्रक्षणमेवोचित, न तु स्वभाव त्याग इति भावः ॥ अनभिज्ञापक्षे, तत्र तत्र स्वरक्षणेन यथा वयं रक्षितास्तथेदानीमपि स्वमकटनेन रक्षणीया इति भावः ॥

मानिनीपक्षे, ननु यदि भवतीनां वधो ममाऽभीप्सितः स्यात् तर्हि भवन्यो न राक्षना' स्युरित्याशङ्क्याहु ॥ विषेति ॥ तथाच स्वहस्तेन यथार्थमेव रक्षिता इति वर्तमानकालीनया प्रत्यक्षया ज्ञायत इति भावः । तत्र तत्र रक्षणपरायणे श्रेष्ठत्वेन ख्याते त्वयि विश्वस्तानामस्माकं घातो नोचितो, विश्वासघातारूयकर्मकर्तृत्वायोग्यत्वाच्छ्रेष्ठस्य तवेति संबोधनाशयः ॥

निवृत्तिपक्षे, किञ्चास्माकमपि तव तत्त्वज्ञानादेव रक्षणं भवति, नान्यथेत्याहुः ॥ विषेति ॥ ते तव ज्ञानादिति शेषः । हे ऋषभ क्षराक्षरातीतपुरुषोत्तम, तव ज्ञानाद्धेतुभूतादधिकारिभिस्त्वद्नुग्रहेण सपादितात्पुन पुनर्वयं रक्षिता जाता।परमात्मज्ञानस्य विशेषणानि विषरूपस्य, विषेक्षणप्रश्नुनाद्वेदो मामय महरिष्यतीति भयहेतुत्वेनाभितस्य जलस्य, डलयारभेदाज्जडस्याल्पश्रुतस्याप्ययात् पलायनकराव । पुनश्च व्यालाना बहुश्रुतत्वेऽपि विपरीतार्थकल्पकत्वात् खलाना, राक्षसात् राक्षसवद्भयङ्करात् । व्यालो दुष्टगजे सर्पे खले श्वापदसिंहयोरिति मेदिनी । वर्षस्य तु खद्वेषोत्थनाद् वातवत्तत्क्षाशकरात् । तत्र को मोह क शोक एकत्वमनुपश्यत इत्यादिश्रुतेः । तथा वैद्युतात् विद्युद्वद् निष्प्रभतरणादिस्थानीय ज्ञान वैद्युतम् । विद्युत्तडिति स न्याया स्त्रियां त्रिषु तु निष्प्रभ इति मेदिनी । तदेव वैद्युत,तत्सम्बन्धियद्धङ्कारादिकं वा । तस्याऽनलादनलवद्दाहकात् । तथा वृषमयात्मजाद् भगवदाराधन लक्षणं निष्कामं कर्म नित्यादि समाख्यात वृषशब्दप्रतिपाद्यम् । तन्मयादात्मनोऽत करणाज्जातात् । अत एव, विश्वत० सर्वतः

अभयात् सर्वप्रकारेणाऽनुच्छेद्यात्। हेतुबाधेन सर्वभयोच्छेदकरादिति वा। द्वितीयार्द्धं भ. भवतीति श्रुतेः ॥ ३ ॥

युक्तं च स्वदासादिरक्षणं, तदर्थमेव नन्दनन्दनविग्रहात्मनाऽऽविर्भूतत्वादित्याशयेनाहुः ।

न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक् ॥
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान् सात्वतां कुले ॥ ४ ॥

नेति ॥ गोपिकाया यशोदाया नन्दनः सुतो भवान्न भवतीति प्रसिद्धम्। किन्तु सर्वप्राणिनां योऽन्तरात्मा तस्य दृक् साक्षी अन्तर्यामी भवान् एवम्भूतोऽपि विखनसा ब्रह्मणाऽर्थितो विश्वस्य रक्षणाय प्रार्थितः सन् सात्वतां यादवानां कुले उदेयिवान् प्रादुर्भूतः । न नेत्रजातमीभिः किमि युक्तं— निघ्नो नेह किं वध इति तस्मात्तिरोहित एव स्थास्यामि, यथा युष्माकं कदापि दर्शनं न भवेदित्याशङ्क्याहुः ॥ सख इति ॥ तथाच भवद्दत्तसख्यानुरूपेयं युक्तिः करुणोद्दीपिका, न तु कोपाद्दाहोऽतो विश्वगोपनाय प्रादुर्भूतस्य तव नम्भ्यगतानां स्वयं सखीभावावेशितानां करुणया पालनमेवानुरूपमिति भावः । यद्वा सर्वान्तरद्रष्ट्रयाभिज्ञस्य तवास्मदन्तःकरणानि प्रियमाणे(?)कोपरि दृष्टिः कर्तुं युक्ता, न तु दर्पाभासोपालम्भोत्पादिगणनेत्याशयेनाहुः ॥ नेति ॥ अनभिज्ञापक्षे, तथाच कालयमनाम्ना स्त्रीयरक्षणादिना लोकोत्तरसामर्थ्यप्रकटनाद्वयमेव तर्कयाम इत्याशयेनाहुः ॥ नेति ॥ खलुशब्दो वितर्के । सर्वापेक्षयाऽल्पबलाया गोप्याः सुतो भवान्न, किन्तु सर्वदेहिनामन्तरात्म

दृगिति तर्क्यतेऽस्माभिः । ननु सर्वान्तर्यामिणो मम देहिभ्रुवेन कथमुत्पत्तिरित्याशङ्क्याहु॰ ॥ विखनसेति ॥ सात्त्वता सात्त्वकानां सज्जानानां कुले विश्वगुप्तये उदेयिवान् । तस्मात् तत्राभिमानो, न तु अ माऽत्र सर्वपालनायावतीर्णस्य तव सखीनामस्माकमुपेक्षा नोचिता । दर्पोऽप्यस्माकं त्वदुत्कर्षहेतुरत कोप विहायाग तव्य मिति भाव॰ ॥ मानिनीपक्षे अहो निर्दयशिरोमणिरय क इति बहु विचार्य्य यथाऽस्माभिर्भगवान्निश्चितस्तथेत्याशयनाऽऽहु॰ ॥ नेति ॥ भवान् करुणाहीनः प्रयसीदु खाभ्या तदाविष्टस्वान्ताया श्री यशोदाया न दनस्नदीयाना दु खमदत्वान्दान वजनक सुतो न भवति । तर्हि कोऽह निश्चिन इतिचेत्त नाहु ॥ सर्वप्राणिनाम तर्यामी स एव परमदु खत्वना दु ख पश्यनपि तद त सुख वमाति । सर्वान्त स्थस्य तस्याबहिराविर्भावे निमित्तमपि वय विद्म इत्याहु ॥ विखनसेति ॥ स्वसृष्टिवृद्धिमभीप्सुना ब्रह्मणा विश्वगुप्तये प्रार्थित॰—त्वद्भक्त्या जीवाना मोक्षो भवत्यतस्त्वमवतीर्य्य गुप्तस्तिष्ठतद्ईश्वरत्वाद्विना मपि त्वीश्वरमन्य म यमानानामपि मोक्षो दुर्लभो भविष्यति, तत एव मे सृष्टेर्वृद्धिर्भविष्यतीति विधिनाऽभिलसितार्थ परदारपरद्रव्यचौर्य्यादिक स्वस्वभावप्रतिकूल स्वगोपनार्थमङ्गीकृतु सात्त्वतां कुले उदेयिवान् । अत एव परदाराणामस्माक सख्यमाश्रित वानिति सबोधनाशय । यद्यपि स्वगोपनाथमेव त्वं प्रवृत्तस्त थाप्यस्मद्दु खकरमौदासीन्य किमिति स्वज्ञापक चिह्न पुन र्गृहीतवानत स्वप्रकटनासपादक तत् सर्वथा त्याज्यमणीयमि ति भाव । यो विश्वस्य प्रपञ्चस्य मोक्षमार्गेऽप्रवृत्ति प्रसाद्नेन सरक्षणार्थ सात्त्वता दयादिसात्त्विकधर्मवता कुले तेषामपि ततो वैमुख्यसम्पादनार्थमुदेयिवान् अस्माकमपि स्वधर्माद्विच्युतिसिद्ध्यर्थ सख्य गृहीतवानिति सम्बोधनाशय । यद्वा प्रथम निर्दिष्टस्य

नञ सर्वपादैः सम्बन्धः । भवान् गोपिकानन्दनो न खलु प्रसिद्धं तद्रक्षणाद् व्याप्तत्वात् । नाप्यखिलदेहिनां हृद्गतभावज्ञः । अस्म मनोगतप्रेमातिरेकाज्ञानात् । तथा विखनसा, न हिंस्यात् सर्वा भूतानीत्यादिवेदवाक्यैर्विश्वगुप्त्यर्थं न प्रार्थितो, यथोक्तप्रार्थनावाक्यमपि न श्रुतवान्, अस्मद्विनाशपरायणत्वात् । नाऽपि सात्वतां कुल उदेयिवान् तत्कुलोचितकृपालुत्वाद्यदर्शनात् । तथा तद्धर्मासम्पादनाद् इत्थैव गोपिकानन्दनत्वादिना ख्यातोऽसीति भावः । अत एव सखित्वेन ख्यातः सखा न भवसि मानुषधर्माक्रान्तत्वादित्याशयेन सम्बोधयति, हे असख्य इति ॥

निवृत्तिपक्षे, खलुशब्दो निषेधे । भवान् गोपिकानां श्रुतीनामस्माकमानन्दकरो न भवतीति न, यतोऽखिलदेहिनामन्तरात्मदृक् । यो विज्ञाने तिष्ठन् विज्ञानमन्तरो यमयति यं विज्ञानं न वेदैष त आत्मान्तर्याम्यमृत इति श्रुतेः । विशेषेण खनति पदार्थं विचारयतीति विखना विद्वान् तेनार्थितो विषयीभूतमोक्षरूपो विश्वस्य सर्वस्य सकार्यकारणसङ्घातस्य गुप्तये सखः स्वैरिन्द्रियैः सह वर्तमानः सन् सत्त्ववतां मनआदीनां समुदाये उदेयिवान् । अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् * जीवभूतां महाबाहो ययेदं धार्यते जगदिति श्रुतिस्मृतिभ्याम् ॥ ४ ॥

तस्मात् त्वद्भक्तानामस्माकमेतत्प्रार्थनाचतुष्टयं सम्पादयेत्याहुः ।

विरचिताभय वृष्णिधुर्य्य ते
चरणमीयुषा ससतेर्भयात् ॥
करसरोरुह कान्तकामद
शिरसि धेहि न श्रीकरग्रहम् ॥ ५ ॥

विरचितेति, चतुर्भिः ॥ करसरोरुह नोऽस्माक शिरसि धेहि तत्र स्थापनेनान्त करणस्यस्य तापस्योपशमो भविष्यति सरारुहात्मक स्यात्यन्तशीतलत्वादिति सरोरुहपदेन सूचितम् । न केवल ता पोपशामक कि तु कामद सकलमनोरथपूर्तिकरम् । ननु स्वकान्त स्येद कृत्यमिति चेत तत्राहुः ॥ कान्तेति ॥ ननु योगिन्येव क स्यापि कान्तो न भवति, कुतो भवतीनामित्याशङ्क्याहु ॥ श्रिय करस्य ग्रहो ग्रहण येन तत । यथा तत्र गृहस्थो भगवान् यथा श्रिय हस्ते गृहीतवास्तस्माच्छिरसि हस्त धारयतु, नास्ति किञ्चि च्छाघकमिति भाव । ननु श्रियो विधिपूर्वक हस्तग्रहणम्भवतीना शिरोग्रहणे को हेतुरस्तीति चेत्तत्राहु ॥ शरणमीयुषा तव शरण गतत्वाभिलाषाणां विरचितमभय येन तत् । एवञ्च विवाहितापेक्ष यापि शरणागतानामस्माक कामशत्रो सकाशात् पालनमत्या वश्यकम् । शरणागतपालनस्यैवत्वस्य तव निजधर्मत्वात । ननु तथापि निपिद्धोऽय प्रकारः सर्वथापि वर्जनीय इतिचेत्त तत्राहु ॥ वृष्णिधुर्य, यदुकुलोद्भवस्य बहुस्त्रीकस्य वृष्णेर्वशधुर्य श्रेष्ठो भवान् पतित्वेन वृतोऽस्माभिरतो नास्ति दोष । तस्मात् हृष्टाहृष्ट दु खमपाकर्तु योग्योऽसीति भाव । यद्वा यस्माद्भिवस्य गुप्तये भ गवत उदयस्तस्मादावश्यकत्वाद्यथाऽस्मद्रक्षण तथा वयावश्य वि धेयामित्याहु ॥ विरचितेति ॥ मदीया भवत्य इत्याश्वासनार्थ क रसरोरुह न शिरसि निधेहि तत्स्थापनेन त्रिवर्गसिद्धिरस्माक भविष्यतीत्याशयेनाहु ॥ कामदम् ॥ यतोऽस्मत्कान्तत्वेनावतीर्ण स्य भगवतोऽस्मन्मनोरथपूर्तिरावश्यकीत्याशयेन सम्बोधयन्ति ॥ कान्तेति ॥ ननु भवतीना सति पतयोऽत कथमह कान्तः, कथ च मद्धस्तसरोरुह कामदमितिचेत तत्राहु ॥ श्रीकरग्रहम् ॥ यथा श्रीपतित्वेन प्रसिद्धा अपि न वस्तुत श्रिय पतय, किं तु स्व

र्णादिमायिकरूपापन्नायास्तस्याः । अत एव भगवद्धस्तकमल त त्करग्रह, तथाऽस्माकमपि मायिकरूपान्तरमभञ्जँस्ते । मुख्यस्तु कान्तो भवानेवात एवास्मान् स्वीकृतवानित्याशय. ॥ किञ्च, स इतेर्भयाच्छरणमीयुषा विरचिताभय मोक्षप्रद चरण प्रपन्नानामि- स्यर्थ । सर्वस्य मनोरथानुरूपफलप्रदानाय वृष्णिषु श्रेष्ठत्वेन भ वानवतीर्ण इत्याशयेनाहु ॥ वृष्णिधुर्य्ये ॥ अनभिज्ञापक्षे, युष्मत्पा र्थनामाकर्ण्य स्वस्मिंस्तत्करणसामर्थ्यमवधार्याहं प्रकटितो भविष्या मीति तदभिमायमालक्ष्य सुकर प्रार्थयन्ति ॥ हे कान्त, करसरोरुह नः शिरसि धेहि । किमर्थमितिचेत् तत्राहु' ॥ कामदम् ॥ श्ररम हारपरस्य कामस्य खण्डनकर तदुद्दीपक च । अनेन रतिमार्थनमपि व्यञ्जयन्ति । अ यथा सर्वोप्यस्माकम् अलङ्क्रिया का तानुमोदना द् व्रथाभविष्यतीत्याशयेनाहुः ॥ श्रीकरः सर्वशोभापूर्तिकर प्रद्यो येन यत्कर्तृक शिरोग्रहण सर्वालङ्कारशोभाकरमिति यावत् । न वा र्यमार्गाद् यद्भय तत्सत्त्वे कथ तेन सुख भविष्यतीतिचेत्तत्राहुः ॥ सम्यकृतेर्मार्गाद्भय तदुल्लङ्घनज य तस्मादपि तव शरण गता ना विरचिताभयम् । इन्द्रादेरपि पराजय कर्तु समर्थस्य तव त्वदी यानां च नास्ति स मार्गादपि भयम् । प्रबलेन त्वया प्रवर्तितस्य सन्मार्गत्वात् । तदुक्त, सर्व बलवता पथ्य सर्व बलवता शुचि ॥ सर्व बलवता धर्म्म सर्व बलवता स्वकमिति । प्रागय वसुदेवस्ये त्यनुरोधेन वृष्णिधुर्य्येति सम्बोधनम् । तथाच पालनशक्तिमत स्तवास्मत्पालनमेवोचितमिति तदाशय ॥ मानिनीपक्षे, नोऽस्माक मध्ये तव सत सम्यक्पलायनादितोऽपि दूरतरतिरोधानाद्यद्भय तस्माच्छरण माप्नाना शिरसि करसरोरुह निधेहि । यत पूर्व वि रचितमभय येन । ज मान्तरे क्षत्रवशोद्भवत्वादभयप्रदत्वमुचितमेव तव हस्तस्येति द्योतय त्य सम्बोधयति ॥ हे वृष्णिधुर्य्येति ।

पुनश्च हे तत्कान्त ॥ तासां कामदं । तथाच का तभावमङ्गीकृत्य येन हस्तकमलेन कामं दत्तवाँस्तस्याधुना शिरसि स्थापने को विलम्ब इति भाव । पुनश्च, श्रीकरग्रहम् ॥ शोभाकरग्रहणयोग्यम् । तथाच तद्भावे तासां शिर एव पातयतीति भावः ॥

निद्रान्तपक्षे, अत स्वस्वरूपप्रकाशनार्थं त्वं कुर्विति प्रार्थयन्ति । विरचितेति ॥ हे वृष्णिधुर्य्य, वृष्णा नि श्रेयमार्थं गृहीतकृष्णाद्यवतार, तव शरणं भियुषां भगवच्चिन्तत्वादिप्रपन्नलक्षणवतां श्रीकरग्रह मोक्षश्रीसम्पादकमाग्रह नोऽस्माकं श्रुतीनां शिरसि मस्तके उपनिषद्भ ग क नद्रूपो रसो, अज्ञान वातकरस रालि ध्दातीति करस्तस्य निषेधे । श्रीकरेति सम्बोधन वा । तथात्वे सति मत्मामिस्तेषा सुकरेत्याह ॥ हे कान्त ॥ अस्मत्प्रतिपाद्य, काम यति खण्डयतीति त सर्वेत्रामनौच्छेदकरम् । पुनश्च, अरुहम् अरूणि वेद रूपशब्दप्रमाणाद् यानानि मतानि ह तीति तथा तम् । अत एव सत्रनेभैयादिराचनाभयम् । एवम्भूतग्रहस्य त्वत्कृपा विनोदयासम्भवात्तस्य त्वां प्रा ययाम इति भाव ॥ ५ ॥

अपरा म र्थयन्ति ।

व्रजजनार्तिहन् वीरयोषिता
निजजनस्मयध्वसनस्मित ॥
भज सखे भवत्किङ्करी स्म नो
जलरुहाननं चारु दर्शय ॥ ६ ॥

व्रजजनार्तिहन् व्रजजनपीडानाशाय कृतावतार । तथाच स्वावतारसमय एव योजनमवलोक्याप्यस्मदार्तिनाशनं तवोचितम् । न चातोऽधिका काचिदार्तिरस्त्यस्माकमिति भावः । किञ्च, हे

योषितां वीर दानशूर ब्रह्मादिभिरप्यशक्यपूरणाया अस्मदिच्छाया पूरक । ननु सत्यमेव तथापि भवतीनां मानरूप दोषमवलोक्य तन्निरासाय तिरोहितोऽस्मीतिचेत् तत्राहुः ॥ निजेति ॥ निजजनानामस्मदादिस्त्रसेवकानां स्मयस्य गर्वस्य ध्वंसन स्मित प्रय । तथाच स्मितमात्रस्यैवोत्कटमार्थनोत्पादनेन तन्नाशकस्य सम्भवात किमर्थं तिरोधानाय प्रवृत्तोऽसीति भाव ॥ स्मितेन हास सङ्क्षेपेनैव गर्वध्वसो भवतीति वा । अतोऽस्मान् भज सेवय । ननु पालनमार्थनाधिकारवतीनां, भजेति मार्थनादद्यापि स्मया न निवृत्त इति गम्यत इतिचेत् तत्राहुः ॥ भवत्किङ्करीरिति ॥ अस्मत्कृतसेवनसदृशभवत्कर्तृकसेवनेनैवास्मत्पालन नान्यथा । तथाच स्मयकम् । ये यथा मां मपद्य ते तांस्तथैव भजाम्यहमितिभवत्प्रतिज्ञासत्त्वात् तदनुसारेण गृहीतसखिभावस्य यथोक्तपार्थनायामनौचित्यशङ्का नो कार्येति द्योतनाय सखेत्यपन्ति ॥ हे सख इति ॥ अस्मत्कैङ्कर्यं प्रसिद्धम् । यद्वा यथेच्छास्ति तथा कुरु, सम्प्रति तु कमलाननं स्वमुखं चारुमनोहरमस्माक दर्शयेति सदैन्य मार्थनम्॥ अनभिज्ञापक्षे, हे वीर प्रदेयस्य दाने समर्थ नोऽस्मान् भजाऽस्मन्निकट सर्वदा तिष्ठ । प्रथम तु चारु जलरुहानन योषितामबलानां नो दर्शय । यतो, हे व्रजजनार्तिहन् ॥ अ यथास्म मरणाद्यस्मप्यादार्त्तिनाशनव्रतभङ्गः स्यादिति भावः । गर्वं वसनायान्तर्धानं ना चिन, तस्य मुकरोपायसाध्यत्वादित्याशयेनाहुः ॥ निजेति ॥ ननु पूर्वं कुतो गर्वं कृतवत्य इत्याशङ्क्य किंकरीणामप्यस्माकं त्वयैव सख्यपदे स्थापितत्वादित्याशयेनाहु ॥ सखे, भवत्किङ्करीरिति ॥ यद्वा अस्मत्त्याग एव यदि तवाग्रहस्तर्हि समत्यस्म मरणकाले चारु स्वमुखपद्म सदर्शय, दृष्ट्वा प्राणत्याग करिष्याम इत्यर्थ ॥ मानिनीपक्षे, व्रजजनातिहर्तापि योषितां वीरस्तद्वधे समर्थ । अत एव

निजजने यः स्मयस्तेन, निजजनस्मयाभ्वसन स्मित यस्य । अतो यथोक्तप्रदर्शि दृष्ट्वा वयमपि सम्प्रति मरणायोद्युक्तास्तस्मात् तवा स्मजीवनमपेक्षित भवेच्चर्हि हाग्रमागत्य भवत्किङ्करीरस्मान् भ ज सेवनायाश्रय । शठ प्रति शठ कुर्यादित्युक्तत्वाद्यथा सखापि भयानस्मद्दुखाय तिरोहितस्तथा सख्योऽपि वय तव दु खाय धू र्तशिरोमणेस्तवाग्रे तिरोधानसामर्थ्याभावान्मरिष्याम इति सूच यन्त्य सम्बोधयन्ति ॥ हे सख इति ॥ किञ्च झटिति जलरुहानन चारु दर्शय अ यथा पश्चात्ताप करिष्यसीति भाव. । यद्वा, जिघांसन्त जिघासीयादित्युक्तत्वात् सर्वा दण्डयितु किमर्थ प्रहर्षो ऽस्यत एता भवत्किङ्करी. भज यथा सेवय, नोऽस्माक तु चारु जलरुहाननमात्र दर्शय । अपकर्तुरपि सख्युर्मुखदर्शनेच्छा न नि- वर्तते । इद मार्थयाम । किं कुर्म इति, सख इति सम्बोधनाशय' ॥

निवृत्तिपक्षे, खातुग्रहानुपानिपत्सु लब्धाग्रहस्य प्रजो वेद स्तत्सम्बन्धिन आस्तिकशिरोमणिभूतस्य जनस्यार्ति ज ममरण- लक्षणसहितदु ख हरतीति तथा । यतो योषिता श्रुतिलक्षणस्त्रीणा- मस्माकमस्मदीयाना च रक्षणे परमसमर्थ ॥ रक्षणप्रकारमाहु. ॥ निजजनाना स्वभक्ताना स्मयस्याऽहङ्काराविद्यास्य ध्वसनाय स्मित म दहासो यस्य । हासोजनो मादकरी च मायेति हासश- ब्दाभिधेयायाः सर्वानर्थबीजभूताया मायाया मन्दत्व स्वभक्तेष्व- वर्शन तस्मात्, सखे सर्वदास्मत्सपृक्त, भवत्किङ्करीर्भवत्प्रतिपादन- रूपसेवापरायणा, अस्मत्प्रतिपान्नतामाश्रयानथाच विवेक्य त करणे- ऽस्मत्प्रतिपाद्यता प्राप्य, तस्य जलरुहस्य चतुर्दशभुवनात्मकपुष्कर- स्य कमलस्य चानन सत्तास्फूर्तिप्रद स्वरूप दर्शय । को ह्येवाऽ या- त् क प्राण्याद् यदेप आकाश आनन्दो न स्यादित्यादिश्रुत्या स र्वसत्तास्फूर्तिद परम त्व प्रतिपादित इति प्रकाशयेत्यर्थ. ॥ ६ ॥

अथ याः प्रार्थयन्ति ॥

प्रणतदेहिनां पापकर्षणं
तृणचरानुगं श्रीनिकेतनम् ॥
फणिफणार्पितं ते पदाऽम्बुजं
कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥

प्रणतेति ॥ पदाऽम्बुजं नः कुचेषु कृणु कुरु बहुवचनं समुदायाभिप्रायेण । ते त्वदीयानां न इति वा । ननु विरहानलज्वालातप्तेषु स्तनेष्वतिसुकुमारचरणस्थापनप्रार्थनं नोचितमिति चेत् तत्राहुः ॥ फणिनः कालियस्य शेषस्य फणासु अर्पितम् । तथा च परमकोमलमपि विलक्षणशक्तिमत्त्वान्न केनापि पीडयितुं शक्यमिति भावः । ननु तथापि स्तने चरणस्पर्शो नोचित इतिचेत्तत्राहुः ॥ श्रीनिकेतनम् । लक्ष्म्यावासस्थानम् । तथा च श्रीर्यत्र सर्वदा तिष्ठति तस्य स्तनेषु स्पर्शेऽप्याशा क्व सन्देह इति भावः । ननु कामाक्रान्तत्वेन त्वत्तया निकृष्टानां युष्माकमनुरोधो नोचित इतिचेत्तत्राहुः ॥ तृणचरानुगम् ॥ यथा भगवता पाल्यमाना अपि गावस्तृणं परित्यज्याऽमृतं नाश्नन्ति, किं तु तृणमेव तासाममृतं तथापि कृपालुना त्वया नोपेक्ष्यन्तेऽपि तु तदनुरोध एव क्रियते, तद्वदस्मदादीया अपि वयं यद्यपि कामासक्तास्तथापि नोपेक्ष्या इति भावः । ननु तथापि युष्माकं जितेन्द्रियत्वादिसम्पादकपापवर्जनेऽसत्त्वत्त्वेन कथं मत्पादस्पर्शाधिकारस्तस्मात्तात्प्रवर्तककर्मानुष्ठानानन्तरं तथा करिष्यामीतिचेत्तत्राहुः ॥ प्रणतदेहिनां पापकर्षणं प्रकर्षेण धर्मत्यागपूर्वकं ये नता देहाभिमाननिवर्तकतत्त्वज्ञानरहिताश्च तथा पापनिवर्तकयोः स्वधर्मतत्त्वज्ञानयोरभावात्

स्वपदाऽम्बुजमेव स्थल इव स्पृहयन्ती तन्निवर्तकं न भवदन्तस्थ भूता
नामस्माकं तेनैव पापनिवृत्तिसमर्थानुष्ठाना नपेक्षितमिति भाव
तत्र तदर्पयित्वा हृच्छय काम कृन्धि विनाशय । तथाच न पापनिवृत्ति
रस्माकमभिलषिता, किं तु कामस्य निवृत्तिरिति भाव । यद्वा भवत्य
कामोपाधिकप्रीतिमत्यो न दर्शनमात्रस्याधिकारिण्य इतिचेत् तत्रा
हुरेवञ्चेत्तर्हि तत्प्रतिबन्धकं काममेव कृन्धि । कथमित्यपेक्षायामाहु ॥ नः
कुचेषु स्वपदाऽम्बुज कुरु । ननु न जातु, काम कामानामुपभोगेन
शाम्यति * हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धत इत्युक्तत्वा
त् तत्स्थापनेन न तन्निवृत्तिर्भविष्यति, किन्तु प्रत्युताभिवृद्धिरि
ति शङ्कापि परस्थापनप्रार्थनया निराकृता । इस्तस्थापनस्य तदभि
वृद्धिहेतुत्वात् । ननु तत्स्थापनस्याऽभिवृद्धिहेतुत्वाभावेऽपि कथ
तन्निवृत्तिहेतुत्वमित्याशङ्क्याहु ॥ फणीति ॥ तथाच कालियफणा-
र्पणेन यमुनाह्रदस्य निर्विषत्व त्वया सम्पादितम् । तद् दृष्ट्वा देह
लक्षणफणिनः कुचलक्षणफणार्पणेन यमुनाह्रदस्थानीयहृदयस्य
कामरूपविषस्य नि मरणेन निर्विषत्वसम्पादनसमर्थत्वमित्यनुमीमह
इति भाव. । न केवल दोषनिवर्तकमात्र किं तु गुणाधायकमपीति
द्योतनायोक्त— श्रीनिकेतनम् ॥ तथाच तस्माद्धर्मज्ञानैश्वर्यादिलक्ष-
णश्रिय स्पर्शमात्रेणाधायकमिति भाव । ननु परमोत्कृष्टस्य मत्पदा-
ऽम्बुजस्य स्पर्शोऽपि दुर्लभ इत्याशङ्क्य निरासायोक्त— तृणचराऽनु
गम् ॥ तथाचास्मदधिकाराभावेऽपि तव करुणया तस्य सौलभ्यमिति
भाव । ननु तथापि पापनिवृत्तिं विना कथ तत्सम्भव इत्याशङ्क्या
निवृत्त्यर्थमुक्त— प्रणतेति ॥ अनभिज्ञापक्षे अन्य हृत्तापशान्तिकरोप
लेपौषधमिव बहिर्हृदि अङ्गसङ्गमभीप्सन्त्यो दैन्येन चरणसङ्गमे
व प्रार्थयन्ते ॥ प्रणतेति ॥ ते पदाऽम्बुजमस्माकं तमेषु कुचेषु नि
धेहि । ननु पापभयान्नैव कर्तुं शक्नोमीति चेत् तत्राहु ॥ प्रणता

नलकूबरादीनां स्थावरत्वादिपदपापस्य कर्षणमतस्तेन तव का पा पप्राप्तिसम्भावनेति भाव । यद्वा, ननु किमिति करपद्मस्थापन न प्रार्थ्यते इत्याशङ्क्य स्वापराधनिवृत्त्यर्थमादौ पदाऽम्बुजस्थापनमे व प्रार्थ्यत इत्याशयेनाहु ॥ प्रणतेति ॥ प्रणतानामस्मदादीनामप राधनाशकामित्यर्थः । ननु नैव प्रार्थनीय, कठिनेषु तेषु स्थापनेन मृदुलस्य चरणस्य पीडोदयादित्याशङ्क्याहु॰ ॥ तृणचरानुगम ॥ तृणचरैराचत्य तत्कठोरवस्तुषु स्थापनादेवकृतेनाधिक दुःखमिति भावः । अनेन यथा तृणचरानुग्रहवशात् तदनुगमनजन्यपादपीडा त्वया न गण्यते तथास्मदनुग्रहवशादपि सा न गणनीयेत्यपि भ्व नितम् । ननु नानारत्नालङ्कारालङ्कृतेषु युष्मत्कुचेषु पादार्पण न शोभत इतिचेत् तत्राहु ॥ श्रीनिकेतनम ॥ नखचन्द्रादिशोभास्प दत्वात्तोऽप्यधिकालङ्कृतिकरमिति भावः । ननु युष्मद्धृदयस्पृता पजन्यदाह॰ कथ सोढु शक्य इतिचेत् तत्राहु ॥ फणीति ॥ भव तु किं तत इति चेत्तत्राहु ॥ कृच्छय काम कान्ति, पश्चाद्यथा कामोपशमः स्यात्तथा कुरुष्वेति भाव ॥ मानिनीपक्षे, ननु युष्म दर्शनमात्रस्य कामोद्दीपनत्वान्मानवतीना युष्माकमालिङ्गनादेर्दुर्घट त्वात् कामबाधाभयात्कथमाविर्भवामीतिचेत् तत्राहु ॥ प्रणतेति ॥ अहो सत्यमिद, तथाप्याग तव्यमागत्य च न. कुचेषु यथाकथञ्चि त् पदाऽम्बुज कृणु । एतावन्मात्रमस्माभिरनुज्ञायत इति भाव. । ननु एतावता मम प्रयोजन कथ भवतीतिचेत् तत्राहु॰ ॥ कृ धीति ॥ अस्माक लोकोत्तरसौन्दर्य्यत्वादेतावतैव तव स्तुतिर्भविष्यतीति व्य ङ्ग्य. । ननु सर्वोत्तमाना युष्माक प देन स्पर्शे कृते पाप भविष्य तीति नाह तथा कर्तु शक्नोमीति चेत्तत्राहु. ॥ प्रणतेति ॥ ननु प रमकोमलस्य पदाऽम्बुजस्यातिकठोरयुष्मत्कुचस्पर्शेन पीडा भविष्य ति, तथाच तथा व्याप्तहृदयस्य मम रसाविर्भावो दुर्लभस्तत. करा

ऽम्बुजापेणमनुज्ञायतामितिचेत्तत्राह' ॥ तृणेति ॥ अहो मत्पक्षाप लापपरायण धूर्तशिरोमणे तृणशकराद्यपेक्षयाऽप्यस्मत्कुचा. किं कठोरा इति भाव । ननु भवतु, यथाकथंचित्स्थापयिष्यामि, तथापि तेन कुचानां शोभा नङ्क्ष्यतीतिचेत्तत्राहु ॥ श्रीति ॥ शोभा निवृत्तिभय न कार्य, तव चरणस्य शोभास्पदत्व त्वस्माभिर्ज्ञायत इति भाव.। ननु मदीयेन तिरोधानरूपापराधेन भवतीनामन्त करणे म हाक्रोधो वर्तते । तथाच क्रोधानलज्वालया तद्दाहाद्यसम्भावात् क थ रसानुभव इतिचेत्तत्राहु ॥ फणीति ॥ अहो किमिसेवमनु-भूताद्भुतसामर्थ्यानामग्रतो बहुविधचातुर्य प्रकाश्यते त्वया, न हि कालियविषाऽदग्धस्या'येन केनचिद्दाह सम्भवतीति भाव ।तस्मा द्व्य विहायाग'तव्यमिति भाव ॥

निवृत्तिपक्षे, न'च'त करणशुद्धिं विनद कथ भविष्यतीति चेत् साऽपि त्वदधीनेत्याशयेनाहु ॥ प्रणतेति ॥ तव पदाऽम्बु-जोपासनन हि तस्य शुद्धिर्भवत्यतस्तत्र कुचेषु कर्मोपासनमतिपा दनभागेषु कुरु भगवत्पदाऽम्बुजाराधनमेव कर्मोपासनाकाण्डयोरर्थ इत्यधिकारिचेतसि प्रकाशयेत्यर्थ. । यतस्तव पदाऽम्बुज फणिन शेषस्य फणास्वर्पितम् । तथाच नारायणपरा वेदा नारायणपरा मखाः * नारायणपरा योगा नारायणपरा क्रिया इत्युक्तत्वाच्छेष शायिनो नारायणस्य भगवतस्तव पदाऽम्बुजसेवनमेव काण्डद्वयार्थ इति भाव.। यतश्च श्रीनिकेतन भोगमोक्षश्रीप्रदम् । यतश्च साध कानुग्रहार्थ रामकृष्णाद्यात्मनाऽवतीर्णस्य तव तृणचराऽनुगम् । गो,घ्रगाद्यनुगमनपरम् । तृणचरैस्त्यक्तसर्वभोगैस्तपस्विभिरनुगम्यत आराध्यत इति तदिति वा । यतश्च प्रकर्षेण नतिमात्रमपि कृतवता देहिना समस्ततापोच्छेदकम् । तदुक्तम् । एकोऽपि कृष्णस्य कृत. प्रणामो दशाश्वमेधाऽवभृथेन तुल्य. * दशाश्वमेधी पुनरेति ज म

कृष्णचरणगामी न पुनर्वर्त्तायेति। एवम्भूतेन काण्डद्वयप्रतिपादितेन सम्यगुपासितेन निजजनस्य हृच्छय कामं क्रोधं विनाशयेत्यर्थः ॥७॥

अपरा एतावता तु स्वनिवृत्तिमपश्यन्त्य प्रार्थनाना किं दास्यामिति विचिन्त्य परमोत्कृष्टं वस्तु प्रार्थयन्त ।

मधुरया गिरा वल्गुवाक्यया
बुधमनोज्ञया पुष्करेक्षण ॥
विधिकरीरिमा वीर मुह्यती-
रधरसीधुनाऽऽप्याययस्व नः ॥ ८ ॥

मधुरयेति ॥ मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः * स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इत्यादिरूपया मधुरया अर्थतोऽत्यन्तमिष्टया वल्गूनि मनोज्ञानि वाक्यानि यस्या तया शब्दतोऽप्यत्यर्थं मधुरया । अत एव, बुधमनोज्ञया बुधानां विदुषां हृद्यया विधिकरीः किङ्करीरस्मान् । तथाच नास्माकमविचारतो मदाचारिरिति भाव । सम्प्रति तिरोधानलक्षणया लीलया मुह्यतीर्मूर्च्छां मरणपूर्वावस्था लभमाना इमा इतीत्यागत्य द्रष्टव्याः । हे पुष्करेक्षण पुष्करे हृदयकमले ईक्षणं यस्य सः । तथाचान्तर्यामिणा त्वया सर्वं ज्ञायत एव, नास्ति विज्ञापनकृत्यमिति भाव । विशालनेत्रेण त्वयेदमागत्य प्रत्यक्षेणोपलब्धव्यमिति वा । दृष्ट्वा च स्वाधरामृतेन नोऽस्मानाप्याययस्व सञ्जीवय । यतो हे वीर, निजजनार्तिनिराकरणमेव शौर्यकृत्यमिति भाव । या स्वभावत एवाऽकिङ्करीः सम्प्रति विरहदुःखेन मुह्यतीरस्मान्  गत्याप्याययस्व । कथ

मिति चेदाह्यो गिरा । ननु वाणीमात्रेण कथं मोहनिवृत्तिरिति चे त्तत्राहुः ॥ मधुरयेति ॥ मायामयस्य मोहस्य सच्चिदानन्दरूपस्य तव मुखाब्जस्रुतया माधुर्यव्याप्तया तापनिवृत्तिरवश्यं भविष्य तीति भावः । तत्रापि सत्यप्रियहितार्थकत्वाद्वल्गूनि वाक्यानि यस्यां सा । तत्रापि बुधमनोज्ञया ज्ञानरूपया । यत्र तन्निष्ठत्वे प्रतिबन्ध- क तद्ध्यागं यानिकुर्वि पाशयेनाहु ॥ पुष्करेक्षण । तथाच लो कान्तरसौन्दर्याद्यलङ्कृतविग्रहं दर्शयित्वा तद्दर्शनाभिलाषं निव- र्तय तथाऽधराऽमृतपानेच्छामपि तत्प्रदानेन पूरयेत्याशयेनाहु ॥ अधरेति ॥ सर्वमपि कर्तुं प्रदातुं च समर्थोऽसीति द्योतयन्त्यः स म्बोधयन्ति ॥ हे वीरेति ॥ अनभिज्ञापक्षे, न केवलं बहिर्हृदि लेप मात्रेणास्य तापस्य शान्तिः कर्तुं शक्या किं त्वन्योपायबाहुल्यम- पेक्षितमित्याहु ॥ मधुरयति ॥ नोऽस्मानाप्यायय स्वाऽऽह्लादय यतो मुह्यतीरपि त्वया दशा प्रापिताः कथमिति चेत् तत्राहु ॥ गिरा तत्रापि, न प्रतियातं त्वजमिति वज्रवत्कठोरया, किं तु मधुरया । नापि, स्वागतमितिवत् प्रतारणरूपयेत्याहु ॥ वल्गुवाक्यया ॥ य द्यपि मुग्धानामस्माकं नास्ति विवेकस्तथापि त्वया बुधजनमनो- ज्ञैव सा प्रयोक्तव्येत्याशयेनाहु ॥ बुधेति ॥ तथाचैवंविधया गिरा वयं वक्तव्या इत्येका मूर्च्छानिवृत्त्युपायः । द्वितीयमाहुः ॥ हे पुष्करेक्षण । तथाच कमलवद्विशालनेत्राभ्यां वयं सम्यग् द्रष्टव्या इति भावः । तृतीयमाहुः ॥ अधरेति ॥ तथाभूतम् । अमृतरूपमोष धं मृतानामप्युज्जीवनकरं पाययितव्यमिति भावः । तत्रापि विल म्बो नोचित इत्याहु ॥ इमाः क्षणमात्रमपि विलम्बामहे । ननु मम का भवत्यो यदर्थमेवंविधपरिश्रमो मया कर्त्तव्य इत्याशङ्क्या हु ॥ स्त्रिभिकरीरिति ॥ तथाप्यनल्पमिदमौषधं दातुं न शक्नोमी- तिचेत् तत्राहु ॥ वीर ॥ परमोदारत्वाद् दानशूर सर्वस्वमपि दातु

समर्थ। यद्वा यथोक्तोपायेन गतमूर्च्छा भवत्यो यथोक्तोपायकर्त्रे स र्वस्वदाय मह्यं किं प्रदास्यथेति चेत्तत्राहुः ॥ विधिकरीरिति ॥ जन्मजन्मान्तरेषु तव किङ्कर्यो भविष्यामो, न वाऽन्यत् किञ्चित् तुभ्यं दातुं वयं योग्यास्तस्मादेतत्प्रतिनिधिभूतस्येतरवस्तुनोऽभावाच्छरीरमेवार्पयिष्याम इति भावः । तावतापि नास्ति ऋणपरिहारो यद्यपि तथापि दानशूरेण त्वया न किमपि विचार्य्यं, प्रत्युपकारानपेक्षदानस्यैव सात्त्विकत्वाभिधानात् ॥ मानिनीपक्षे, ननु नैतावता मम हृच्छयस्य शान्तिर्भविष्यति, तदुपशामकमस्त्येकं युष्मत्सन्निधौ वस्तु तथापि भयान्न तत्प्रार्थयामीति सदैन्यप्रार्थनामालक्ष्याहुः ॥ मधुरयेति ॥ कठोरा भव मृद्वी वा प्राणस्त्वमसि राधिके * अस्ति नान्या चकोरस्य चन्द्रलेखां विना गतिरित्यादिरूपया मधुरया व ल्गुवाक्यया प्रतारणरूपया अत एवाऽबुधमनोज्ञया गिरा पूर्वं तव वचनकर्य्यो वयं जाता, अत एव सम्प्रति प्रतारणफलभोगसमये मु ह्यन्त्यः मरणोपान्त्यदशां प्राप्ता यद्यप्येव तथापि सज्जनैरपकर्तर्य्युप कर्त्तव्यं इति न्यायमनुसृत्यास्माभिरनुज्ञाप्यतेऽस्माकमधराऽमृतेन स्वात्मानमाप्याययस्वागत्याह्लादय भयात्तिरोहितो मा तिष्ठेति भा वः । स्थूललक्षणधनुर्द्वयेक्षणलक्षणाऽक्षयबाणधीरो वीरशिरोमणिस्त्वं किमर्थं बिभेषीति सम्बोधनद्वयाशयः ॥

निवृत्तिपक्षे, तस्मात्साधकानुग्रहार्थं लीलाविग्रहमादाय, न हि ज्ञानेन सदृशं पवित्रमिह विद्यते * उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत, अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते, यदा भूतपृथग्भावमेकस्थम नुपश्यति, तत एव च विस्तारं ब्रह्म सम्पद्यते तदेत्यादिरूपया मधु रया यथाभूतार्थप्रतिपादकत्वाद्वल्गुवाक्यया। अत एव बुधजनमनो ज्ञया तवौष्ठपुटनि सृताऽमृतरूपया नाऽस्मान् आप्याययस्व । य

तस्त्वद्दाशुज्ज्वलितमिथ्याभूताऽतिकर्कशतर्काऽतिपुष्टवादान्धकारेण, सुहृतीनैचपेक्ष्या, यतो विधिरूरीभवन्ताज्ञारूपविधिमतिपादिका स्तत्र किङ्करीभूता । अनस्तथाभूतया गिराऽवश्यमस्मान् पालय । अनेन धर्मसंस्थापनरूप स्वपालनहेतुरुक्त । साधुपरित्राणरूप यो त्स्य सबोधयति ॥ पुष्करेक्षण ॥ सौन्दर्य्यादिगुणालङ्कृतविग्रहेण स्वस्मिन्नासक्तिसम्पादनेनास्मान् परिपालयेति भाव । अस्मत्पालनाय दुष्कृतिनोऽपि नाशयत्याशयेनाह ॥ वीरेति ॥ ८ ॥

तव कथाऽमृत तप्तजीवन

कविभिरीडित कल्मषापहम् ॥

श्रवणमङ्गल श्रीमदातत

भुवि गृणन्ति य भूरिदा जना ॥ ९ ॥

ननु युष्माक प्रेमातिरेकपरीक्षार्थम तर्हितोऽहं, ततश्च सम्प्रति ज्ञातवानह नाद्यापि भवत्यो मत्प्रेमातिरेकभूमिमारूढा, मद्विरहेऽपि जीवनधारणादित्याशङ्का, नास्माकमपराधस्तव कथा त्वत्सङ्गगुणाऽस्माञ्जीवयति, वय किं कुर्म इत्याशयेनाहुस्तवेति ॥ तव कथाऽमृतम्, अत एव तप्तानामस्म क जीवनम् । तत्र प्रमाणमाहु ॥ कविभि ब्रह्मतत्त्वदर्शिभि सर्वज्ञैर्नारदव्यासशुकादिभिरीडित स्तुतम् । एनेन प्रसिद्धाऽमृताद्वैलक्षण्य सूचितम् । तद्धि विषयाभिर्ब्रह्मभि स्तूयते, न तु कविभि । किञ्च कल्मषापहम् । न हि प्रसिद्ध तत् कल्मष निवर्तयति, किं तु निष्पन्नकल्मषप्राप्यमिदं तु तत्साधार्थे साधनान्तर नापेक्षत इति भाव । किञ्च, श्रवणमङ्गलम् ॥ न हि तच्छ्रवणमात्रेण मङ्गलप्रदमिदं श्रवणमात्रेण मङ्गलरूपम् । किञ्च, श्रीमत् ॥ प्रसिद्धं तु तद् न श्रीप्रदम्, इद मोक्षश्रीपर्यन्त समस्तश्रीप्रदम् । यद्वा श्रीमत्सु शान्त, तत्तु मादकम् । तत्राप्यातत चतुर्दशभुवनेषु व्या

ते प्रसिद्धन्तु तथैवम् । अतो ये भुवि गृणन्ति तेऽस्माकं बहुमदाः परमोपकारकास्तस्मादेव षड्गुणयुक्तेन भवत्त्वयेन जीवनहेतुत्वाद्वतिरोहितत्वाच्च किञ्चिन्निमित्तेन च तव कथाऽमृतेन त्वत्प्राप्त्यर्थं जीवामोऽतो न वयं परीक्षायोग्या, किं त्वनुकम्प्या इति भावः ॥ अनभिज्ञापक्षे अहो महति सङ्कटे निमग्नाना मरणमप्यस्माकं न भवति, किं कुर्म इत्याशयेनाहु ॥ तव कथालक्षणममृतं प्राप्तानां मरणयोग्यानामप्यस्माकं जीवनसाधनं जातम् । ननु कुतस्तल्लब्धम् इतिचेत तत्राहु ॥ कविभिः पुनर्नाधातादिकाना भवच्चरितानां गीतविशेषरचनायां कुशलैरीडितं स्तुतम् । उत्तमश्लोकनलादिचरितवत् कल्मषनिवर्तकम् । श्रवणमात्रेण मङ्गलकरं च यत् श्रीमत् शोभायुक्तम् । न चैवंविधं किञ्चित् स्थानमास्त यत्र तन्नास्तीत्याहु ॥ आततं व्याप्तं, यतो ये भूरिदा महान्तो दातारस्ते उत्तमश्लोकाश्च न भुवि सर्वस्यामपि भूमौ तत्र तत्र स्थिता गृणन्ति । तस्मात् किमर्थं स्वविरहमनाय भोजयितुं स्वकथाऽमृतेन जीवयसि । यदि सर्वथा तवानागमननिश्चयः स्यात्तर्हि किञ्चिदस्मत्स्मरणोपायं रचयित्वा निश्चितं तथा प्रज्ञापयस्वेति भावः । यद्वा, ननु मत्कथया क्षणमात्रजीवनं धार्यतामितिचेत् तत्राहुस्तव कथैव मृतिरुद्दीपनविधया मरणसाधनं यतस्तप्ते तैलादौ जीवनं जलमिव । अत कविभिरननुभूत धिकल्पनाकुशलैरेव कल्मषापहरेणेडितं स्तुतम् । तु स्वभावेन कल्मषं नवीकरमिति वा । तथा श्रवणमङ्गलमापातरम्यमतो व्यर्थमेव श्रीमदेन सौन्दर्याखर्वगर्वेण सर्वत्र प्रस्तुतम् । तस्माद्स्मासु ये गृणन्ति ते भूरिदा महाघातुका । दाऽवखण्डने इति स्मरणात् । तस्मादलं तव कथयेति भावः ॥ मानिनीपक्षे नानानेकगुणवत्त्वेन यत्कथाऽमृतं कविभिरीडितं तस्मिन्नपि मयि भवत्यो नानुरज्यन्त इत्याशयेनाहुः ॥ तव कथेति ॥

कविभिरतिशयोक्तिपरैस्तप्तजीवनत्वादिरूपेणेडितम पितम्रकथाऽमृत भूरिदा उदारा असमत्तुल्या जना श्रीमद्देन तत व्याप्त गृणन्ति । अतो नारणाभिस्त्वय्यनुरज्यत इति भाव ॥

निवृत्तिपक्षे, किञ्च, तव चरित्रकथाऽमृतपानेनानेकेष मुद्धा रो भविष्यतीत्याहु ॥ तव कथाऽमृत, यत , तप्ताना त्रिविधतापतप्ता- नां जीवन तापनिवर्तकम् । यद्वा, पीता गाव इतिवत्तप्तानां ज्ञा निना जीवनरूपम् । तव आलोचन इति स्मरण।द । यतः कविभिर्ब्रह्म विद्भिः सनकादिभिराडितम् । किञ्च, न तव कथाऽमृतमविनाक्र चक्षुषा घ्रायणादिकर्मापेक्षेत्याहु ॥ कल्मषापहम् ॥ कथान्तरायभू तनिरयमद्पापकर्मनिवर्तकम् । तत्रापि श्रवणमङ्गलम् ॥ कृच्छ्रा दि घोररूपत्वाच्छ्रवणऽप्यमङ्गलम्, तवोद्धारचरिताऽमृत तु श्रवण- मात्रेणाप्यानन्दप्रदम् । नचापातरम्यमपि तु श्रीमद् बालत्वसम- स्तोद्धारशोभालंकृतम् । अत एवातत सर्वत्र व्याप्त, न स्वेकदेशि तस्मान्ने भुवि अधिकारभूमौ गृणन्ति ते भूरिदा महान्तो दातार' सर्वयज्ञानुष्ठानसर्वस्वदाक्षिण्यादिफलवन्त । यद्वा ये जन्मान्तरेषु भू रिदास्त एवास्मिञ्ज नानि गृणन्ति । यद्वा मुमुक्षूणामनुग्रहार्थं ये गृणन्ति ते भूरिदा जना, अभयदानसमं दान नास्तीत्युक्तत्वाद् अभयदानत्वेनानल्पदा । यद्वा, ये गृणन्ति ते, भूरिदाश्च ते अजना विष्णुस्वरूपाश्च । हे भूरिदेति वा । तस्माल्लीलाविग्रहमादायास्मदु द्धारो लोकोद्धारश्चावश्य सम्पाद्य इति भाव' ॥ ९ ॥

ननु यावद्गमण जात तावतैव सन्तोषो विषय, इत पर च म त्कथाऽमृतपानेन जीवतीभिर्मद्ध्यानमेव सपाद्यमिति चेत तत्राहु.

प्रहसित प्रिय प्रेमवीक्षण
विहरण च ते ध्यानमङ्गलम् ॥

रहसि संविदो या हृदिस्पृशः
कुहक नो मनः क्षोभयन्ति हि ॥ १० ॥

प्रहसितमिति ॥ हे प्रिय, हे कुहक, यद्यपि परमात्मा त्वं कपटलीलयाऽस्मत्प्रियविग्रहं प्रकटितवाँस्तथापि त्वद्विषयकरमणेच्छाऽस्माकं न निवर्तते । तादृशदोषदर्शादेव मनः स्थिरं न भवति। तत्र भगवतस्तव प्रहसितं प्रेमपूर्वकवीक्षणं विहरणं क्रीडनं च एतत्त्रितयं ध्यानेऽपि मङ्गलं, तथा रहसि याः संविद' क्रीडासंकेता हृदिस्पृशः अन्तःकरणे प्रविष्टास्तेऽस्माकं मनः क्षोभयन्ति क्षणमात्रं त्वदनुसंधानपरायणमपि मनः हा सम्प्रति भगवत्प्रहसितादिकं नोपलभ्यत इति इत्युदये क्षुब्धं भवति । प्रहसितादयो यद्यपि गुणास्तथाप्यस्यां विरहदशायां दोषा जाताः, अतो वयं किं कुर्म इति । बहुवचनेन बह्वीनामनुभवं प्रमाणयन्ति। हिशब्देन प्रसिद्धिं द्योतयन्ति॥ आभिज्ञापक्षे, तत्र कथायां क्रियमाणायां तत्र नान्तरीयकतया स्फुरन्ति प्रहसितादीनि स्मारकाणि बहूनि स्मृतिपथमारुह्य तीव्रा हु' ॥ प्रहसितं प्रकर्षेणोद्धेहसितम् । अस्मान् दृष्ट्वात्यन्तप्रसन्नताविष्करणरूपं तव प्रहसितं सम्प्रति स्मृतं सदस्मन्मनः क्षोभकरं भवति । यतो हे प्रिय प्रियेण समक्षे कृतं यदानन्दावहं प्रहसितं तस्य विरहदशायां मरणावहमेव भवतीति भावः । तथा प्रहासानन्तरं यत् प्रेमपूर्वकं वीक्षणं विशिष्टं शोभनमीक्षणं कटाक्षद्वारा च केवलं वा तत् । तथा विहरणं सखिभिः सखीभिर्विहारः, विक्षेपेण वेणुनादादीनां हरणमाकारणमिति वा । एतत्त्रितयम् अध्यानमङ्गलं ध्याने स्मरणे मङ्गलरूपं न भवति, किन्तु दर्शन एव । तथा रहस्येकान्ते या संविदस्ता अपि यतो हृदिस्पृशः फलपर्यवसायिन्य' सत्यो हृदयविलौकसः' । तदेतत्परमसुखकरमपि सर्वं तवानया

कपटपटुत्वया परमद्ु खावह सम्पन्नमित्याशयेन सबोधयन्ति ॥ हे कुहकेति ॥ हि निश्चित क्षोभयन्ति । अत्र सशय विहाय त्वकुहक तानिरामायासम्मन क्षोभ निवर्तयेति भाव ॥ मानिनीपक्षे, अहोऽस्माभिरदीर्घदर्शित्वाद्बुद्धचैव यदनुष्ठित तस्य फलमिदानी मुपस्थितमित्याशयेनाहु ॥ प्रहसितेति ॥ त्वया सह यदस्माक प्रह सित यच्च प्रियस्य तव प्रेमपूर्वक वीक्षणम् । हे प्रियेति वा । प्रिय मत्वेति भाव । विहरणम् एतत्त्रय ते ध्याने अहो एतानि कदा प्रहसि तादिक द्रक्ष्यामीति चि तने मङ्गलम् । यावत्कालं तव चि तन स्थित तावदेव त्वत्कर्तृकप्रार्थनादिरूपमस्माकममङ्गल स्थितम् । स प्रति तव चिन्तनसिद्धावमरेऽस्माक परममङ्गल जातमिति भाव । तथा रहसि यास्तव हृदिस्पृश सविदस्ताश्च नो मन क्षोभयन्ति । अहो नाथ प्रहसितादिपात्रभूत स्थितोऽतो वृथैवानभिज्ञत्वाद्रूतज्ञ शिरोमणिभूतस्याग्रे प्रहसितादिकमनुष्ठित कु टलभ्रूविजृम्भैश्वरणा पान्तयोरवस्थितस्तस्मा मोर्ख्येण विपरीतमनुष्ठितमत किं कुर्म इत्येव स्मृतानि प्रहसितादीनि नो मन पुन पुनर्व्याकुलयन्ति । हि नि श्चितम् । यथा कश्चिद्वश्चक सेवको भूत्वा दैन्यसेवनादिना मनो रञ्जयित्वा स्वामिन विश्वासमुत्पाद्य मादकवस्तु प्रदाय सर्वस्वमा दाय पलायते तथा त्वमपि कृतवानसि । अहो कष्ट, किं कुर्म इति कार्यविवेकेन सबोधयन्ति ॥ हे कुहकेति ॥

निरुक्तिपक्षे, एव रूपोऽपि त्व जीवरूपेण स्वस्यैव वञ्चको जातस्तस्य वञ्चनाहेतुभूतानि चेष्टितानि नो वु खकराणीत्याशयेना हु ॥ प्रेति ॥ दु खे सुखत्वाभ्रमस्तथा, हे प्रिय अनित्यासत्येषु नि त्यत्वसत्यत्वभ्रम । तद्विषयाणा प्रेमपूर्वकमीक्षण तथाऽशुचौ शु चित्वभ्रमाद्विहरण तदेतत्त्रय ध्यानेऽपि न मङ्गलम् । तथा रहसि विषयसभोगमङ्कृत्यास्तत्रापि हृदयमविष्टा । सम्यगुत्पादिताभिनिवे

त्था एतानि कुहकस्य मायस्य तव चेष्टितानि नो मनः क्षोभयन्ति अहो किमिति नित्यमुक्तपरमात्मना स्वबन्धचेष्टितान्याश्रितानीति क्षोभं जनयन्ति हि निश्चितम् ॥ १० ॥

चलसि यद् व्रजाच्चारयन् पशू-
न्नलिनसुन्दरं नाथ ते पदम् ॥
शिलतृणाङ्कुरैः सीदतीति नः
कलिलतां मनः कान्त गच्छति ॥ ११ ॥

अहो रात्रौ परमकोमलपदपद्मकृतपलायनस्यास्मत्स्वामिनः का वा पीडा जाता स्यादित्यनुसन्धाय तु मूर्छावस्थामनुभवत्यस्मन्मनो यतो दिनेऽपि यदा त्वं व्रजाच्चलसि तदाऽपि मूर्छावस्थामेव गच्छतीत्याशयेनाहुः ॥ चलसीति ॥ यत्तदा व्रजात् पशून् चारयन् चलसि तदा हे नाथ नलिनात् स्थलकमलादपि सुन्दरं कोमलं ते पदं शिलैः सशूकवन्यधान्यकणिशैः तृणकुशकाशादिनिःकृष्टाग्रतृणैरङ्कुरैश्च सद्यो भूमिं निर्भिद्य निःसृतैः सीदति क्लिश्यतीति नो मनः कलिलतामस्वास्थ्यं गच्छति प्राप्नोति । तत्र व्रजादिति प्रातरारभ्य खेदः । चलसीति चलनात् खेदः । त्वं चलसीत्युक्त्या तव पदं त्वत्स्मान्न विहाय न गच्छति, त्वमेव बलात् तच्चालयसीति सूचितम् । तत्रापि पशून् चारयन् पशवश्च पर्वतारण्यकच्छरूपायां भूमौ चरन्ति, तदनुगमनं च नग्नपद्भ्यां भूम्याद्यनुग्रहार्थं पशूनां चर्मणाऽपरिधेयताबुद्ध्या पादुकाग्रहणं न । नलिनरूपत्वाच्च कोमले स्थाने अस्माकं वा अङ्के स्थातुं योग्यम् । नाथेति सम्बोधनाद् बहवः पशुचारणार्थं नियोज्याः सन्ति तथापि स्वयं चलसीत्यत्र ताश्चर्यम् तन्नितम् । कान्तेति सम्बोधनात्त्वदस्मद्दुःखानुभवमिति सूचितम् ॥ अनभिज्ञापक्षे, किञ्च, त्वास्मिन्नत्यन्ताद्रस्वान्तास्वस्मासु कपटाचरणं नन्याय्यमित्या

हु । ॥ चलसीति ॥ यद्वा, न केवलमधुनैवास्मद्दुःखाय स्वात्मानं दुःखयस्यपि तु सर्वदैव तवैव रीतिरित्याहुः ॥ चलसीति ॥ कठिनता व्याकुलताम् । यद्वा कलिं कलहं लाति गृह्णातीति कलिलस्तस्य भावः कलिलता कलहकर्तृता, तां गच्छति प्राप्नोति । वा कलहं करोतीति यावत् । तथाहि अहो वने भ्रमतः कृष्णस्य परम कोमलं पदं सीदति, अरे मन नैव, तथा चेत् स त्वयः तत्र न गच्छेत् । तस्मात् किमर्थं वृथा खिद्यसि । अयि निर्बुद्धिगोपालिका मदीय पादयुगल स्थलपद्मादपि कोमलतरं किं न पश्यत । अरे मुग्धमन वालुकामय सुकोमले पाय पदं स्थापयत्यतो न सीदति । तथापि विचारविधुरा पशून् किं तथाभूते स्थले चरत्यतस्तान् चारयंस्तदनुगच्छति तदा तदीय पदं शिलादिभिः कथं न सीदति । अरे प्रेमाभविशालनत्वाऽसौ त्वदुपरि पदं कथं स्थापयति । अयि प्रेमलेशेनापि विधुरा तदनुभ्रमणकाले तदुपर्यनवय पदं पतत्येव, तेन च पीडा भवत्येव । अहो भो भ्रान्तश्चेतः सत्यमुक्तं त्वया, नास्त्यमा वस्मदधीनो येन वयं तं वारयामोऽत एवाविभद्दुःखं सहन्त्यो जीवेम । अस्मद्योग्य विधाना सृष्टत्वात् । भो दुःखिनो जीवन्तु भवत्योऽहं तु युष्मत्कान्तपदद्दुःखं द्रष्टुं नालभतो युष्मदेहेभ्यः प्राणैः सार्द्धमधुनैव यास्यामीति ॥ मानिनीपक्षे, अहो दृथा वयं त्वामुपालब्धु मवृत्ता । स्त्रीजनेषु दयालेशरहितस्यान्यत्र तत्प्रसक्षमभावात्त्वत्याशयेनाहु ॥ चलसीति ॥ हे नाथ शोभनवस्तुपालनोपतापवस्तुभाव । यदा पशून् चारयन् चलसि तदा शिलादिभिः परमकोमलं पदं सीदति, नो मन कलिलतां दयया आर्द्रीभावं गच्छति परमकठोरान्तःकरणस्य तव तु तत्र करुणालेशोऽपि नोत्पद्यते । अतः कान्त कस्य स्वकीयस्य परकीयस्य च सुखस्यात नाशक । तथाचैवान्तःकठिनचित्तस्तु विधातृसृष्टो कोऽपि नासीन्नास्ति न

भविष्यति चेति भावः ॥

निवृत्तपक्षे, पुनः क्षोभकरां तच्चेष्टामावेदयन्ति ॥ यत् यदा व्रजाद्देहम यात् पशूनिन्द्रियलक्षणान् चारयन् विषयलक्षणेषु मार्गेषु भ्रामयन् स्वयमपि चलसि, अहं श्रोता स्पष्टेत्याद्यभिमानवान् भासि तत् तदा पथते गम्यते इति पदं सच्चिदानन्दघनस्वरूपं नलिनं चतुर्दशभुवनात्मकपदं सुन्दरं यत् पदाधिष्ठितं सत्सुन्दरतया प्रतीयते तत् तथाभूतपदं यथोक्तया शिलतृणाङ्कुरस्थानीयया नात्मकाधिदैविकाधिभौतिकमभूतैर्दुःखैः सीदतीति कृत्वा नो मनः कलिलतां व्याकुलतां गच्छति । यतो हे नाथ स्वतन्त्रस्य तवैव विभु पादं अस्माभिस्तु खापभोगो नोचित इति भावः । किञ्च, हे कान्त, कस्य सर्वस्यापि सुखस्यान्तः परिसमाप्तिरन्तर्भावो यस्मिन् सः । तथाच यथा श्वा शुष्कास्थिचर्वणं कुर्वन् स्वदन्तनिःसृतरुधिरमस्थिसम्बन्धि मन्यते तथा स्वस्वरूपभूतं सुखं विषयसम्बन्धि मत्वा तदर्थं वृथा खेदं प्राप्नुवन्त त्वामालोक्यास्माकं खेदो भवतीति भावः ॥ ११ ॥

दिनपरिक्षये नीलकुन्तलै
र्वनरुहानन बिभ्रदावृतम् ॥
धनरजस्वलं दर्शयन्मुहु-
र्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥

भगवतस्त्वस्मद्भाग्यवशात् करुणा नोत्पन्नेत इत्याशयेनाहुः ॥ दिनेति ॥ दिनस्य परिक्षये सायंकाले । परिक्षयपदेन दिने प्रद्वेषो ध्वनितः । दिनपरिक्षये आगत्य आयासीति भावः । प्रविष्टान्धकारकलेऽप्यागतः कमलरूपमाननं नीलवर्णैः कुन्तलैरावृतं स

म्यगदृश्यमान, तत्रापि, घन गोधनविस्तयोरितिकोशाद्गोरजोव्याप्तम्। इतस्तत प्रेक्षणेन पुन पुनर्दर्शयन्नपि नो मनसि स्मर काममव यच्छसि, न त्वङ्गमङ्गम्। तत्रापि कामबाणैर्वर्धयन् वीरत्वमेव प्रकटय सीति संबोधनाशय ॥ अनभिज्ञापक्षे, त्व तु संयोगसमयेऽप्यस्मद्दुःखायैव यतस इत्याशयेनाहु ॥ दिनस्य विरहनिमित्तत्वात् परम शत्रो, परिक्षये सम्यग्नाशे सायकाले। अनेनोद्दीपनकाल उक्तः। भ्रमरकुलमालावृतजलजवन्नीलकुन्तलावृत मुखम् इत्यालम्बनस्य सौन्दर्यातिशयो व्यज्यते। तत्रापि घनरजस्वलमिति गोपोचितवेषेणोद्दीपनम्। तादृश मुख सर्वतो व्यावर्तनेन पुन, पुनर्दर्शयन्। तेन स्वापेक्षा सूचयन् नो मनसि स्मर स्मरणमात्रेणापि क्षोभक र बलाद्यच्छसि अर्पयसि। हे वीर अत्रैव त्व वीरो, न तु काम युद्धेऽत एव सर्वदा स्मरमेव यच्छसि, न त्वङ्गसङ्गमिति तव सर्व सकपटमेव चेष्टितमस्माक तु तत्सकल प्रेममयमिति भावः॥ मानिनीपक्षे, यथा दया विहाय स्वाङ्गेषु त्वया चेष्टित तथाऽस्मास्वपी त्याहु' ॥ दिनेति ॥ तथाभूत मुख मुहुर्दर्शयन्नो मनसि स्मर य च्छसि। तथाचास्मान् कामयुद्धाय बलात्कारणोद्योज्य सम्प्रति त द्युद्धावसरे पलाय्य गतोऽसीति दृष्ट तव वीरत्वमित्याशयेन स बोधयन्ति ॥ हे वीरेति ॥

निवृत्तिपक्षे, तथा दिनस्य तत्स्थानीयस्य विवेकस्य परिक्षये वनरुहस्य यथोक्तपक्षस्यानन सत्तास्फूर्तिमद्चैतन्य नीलकुन्तल स्थानीयै घटपटादिमत्ययैरावृत बिभ्रत्। तथा घनरजस्वल चित्ता-द्यर्थं विक्षेपोत्पादकेन रजोगुणेनावृत पुन पुनस्तत्तज्जन्मसु दर्श यन्नोऽस्माक मनसि स्मरमग्नि यच्छसि। स्मेत्याश्चर्ये। यतस्त्व वीर' अविवेकादिसमस्तशत्रुपराजये समर्थ इत्याशयेन संबोधयन्ति ॥ हे वीरेति ॥ १२ ॥

ननु यद्यह करुणारहितस्तर्हि मया युष्माकमिति तत्कोपमाशङ्क्य, हे भगवन्न वयं त्वयि दोषमारोपयाम , किन्तु स्वम दभाग्य वर्णयाम । इतस्तत्र सगमप्रतिबन्धकदोषनिरासायेत्थं प्रार्थ इत्याशयेनाहु. ।

प्रणतकामद पद्मजार्चित
धरणिमण्डन ध्येयमापदि ॥
चरणपङ्कज शतम च ते
रमण न स्तनेष्वर्पयाधिहन् ॥ १३ ॥

प्रणतेति ॥ ते तव चरणकमल न. स्तनेष्वर्पय । यद्यपि त्वदीय चरणसरोजमन्तर्हृदयेऽस्माभिः स्थापयिषित, तथापि तत् तत्र स्थापयितुमशक्यमतस्तत्र त्वमेव स्थापय । चरणस्यापि षड्विधैश्वर्यसम्पन्नत्वात्तत्स्थापनेनास्माक सर्वप्रयोजन सेत्स्यतीत्याशयेन तत्प्रतिपादकानि विशेषणानि । तत्र प्रकर्षेण नतानामनन्यशरणाना काममदमभिलषितमस्तैश्वर्यमत् पदपद्म तत् स्तनयोर्ग्रहीतुमशक्यमत प्रणतेत्युक्तम् । पद्मजेन ब्रह्मणा पद्मजया लक्ष्म्या च अर्चितमिति धर्माधारतोक्ता । तथा धरण्या मण्डनमलङ्करणरूपमनेन यशोऽधिकरणता निरूपिता । तथा आपदि ध्येय श्रीप्रदानेना पाश्रर्त्तीकमिति श्रियोऽधिकरणता कथिता । शतम कल्याणतममिति वैराग्यज्ञानाश्रयता दर्शिता । ततश्च हृदयस्थ कामाधि नाशयति नयन्त्य. सम्बोधयति ॥ हे आधिहन्निति ॥ तद्धिङ्घत्तिरपि नेतावता, किन्तु रमणे कृत इत्याशयेनाहु ॥ हे रमणेति ॥ एवञ्चान्येषा तत्तत्फलप्रदमप्यस्माक यथोक्तफलमात्रप्रदमस्त्विति भाव । यद्वा, चरणपङ्कजमस्माक स्तनेषु अर्पय । एतावतैवास्माक मनोरथपूर्तिर्भविष्यति । तस्य सर्वफलप्रदत्वादित्याशयेन

